श्री केदारनाथशिवतत्त्वग्रन्थमालायाः प्रथमं पुष्पम् ।

श्रीशैवभाष्योपेत-

# महानारायणोपनिषत्

श्रीकाशी श्रीजगद्गुरुविश्वाराध्यगुरुकुले
॰ श्रीचिद्घनशर्मशिवाचार्येण
प्रकाशिता ।

१९२९ क्रिस्ताब्दे

[ मूल्यं १। सपादरूप्यकम् ]

# पंचाचार्यप्रभा आफीस

## सय्याजीरावरोड, मैसूर इत्यत्र लभ्यमानग्रन्थावलिः ॥

| | आणकम् |
|---|---|
| श्री जगद्गुरुरेणुकाचार्यनामावलिः | १ |
| श्री जगद्गुरुदारुकाचार्यनामावलिः | १ |
| श्री जगद्गुरु एकोरामाचार्यनामावलिः | १ |
| श्री जगद्गुरु पण्डिताराध्यनामावलिः | १ |
| श्रीजगद्गुरु विश्वाराध्यनामावलिः | १ |
| श्री पंचाचार्य मंगलस्तोत्रावलिः | २ |
| ...त्र सूत्रावलिः | १ |
| ...विधिः | १२ |
| | ४ |
| | १ |
| | ८ |



...कलिप्यां

...विक्रयार्थं विराजन्ते ।

...का साप्ताहिका पत्रिका कर्णा...
...द्धा विशुद्धवीरमाहेश्वरमत...

श्रीकेदारसिंहासनाधीश श्री १०८ जगद्गुरु नीलकण्ठलिङ्ग
शिवाचार्य (रावलोपनामक) भगवत्पादानामुदाराश्रयतः
सम्पादितं
श्रीकाशीविद्वद्वीरमाहेश्वरसभा-
श्रीकेदारनाथशिवतत्वग्रन्थमालायाः
प्रथमं पुष्पम्

श्रीवृषभेन्द्रपण्डितशिवाचार्यप्रणीत-
श्रीशैवभाष्योपेत-

# महानारायणोपनिषत् ।

नैजामप्रान्तीय-पुरगिरिक्षेत्रीय- बृहन्मठाधिपति-पण्डित-श्री
शिवसङ्ग शिवाचार्य तनूजन्मना श्री काशी जगद्गुरु
विश्वाराध्यगुरुकुलवासिना वीरमाहेश्वरेण श्री-
त्रियब्राह्मणोपाह्व श्री चिद्घन शर्मशिवा-
चार्येण व्याकरणरत्न-शिवसिद्धान्त-
तत्वज्ञोपाधिकेन वीरशैवबुध-
कुलभूषणेन संशोध्य
प्रकाशिता ।

बी. एल. पावगीत्यनेन
स्वीये काश्यां रामघट्टस्थ हितचिन्तक नाम्नि मुद्रणालये मुद्रिता ।
१९२९ ईसवी याब्दे ] [ मूल्यं १।) सपादरूप्यकम्

# सम्पादयितुर्वक्तव्यम्

## श्रीविश्वेश्वरः शरणम्

इह किल प्रतायमाने प्रपंचे संसारानलदन्दह्यमानानां प्राणिनां समुद्धरणाय भगवता भवानीपतिना विश्वेश्वरेण ब्रह्मणा प्रश्वासप्रवचनरूपा निगमागमोपनिषदादयो निबद्धा मुनिमहामान्याचार्यमहाचार्यमहानुभावद्वारा भाष्यांवृत्यादिरूपतया विस्तृता विराजन्ते । तत्र खलु वीरमाहेश्वरग्राह्यं वीरशैवदर्शनं वरीवर्ति । पुरातु परमतकालानल-परवादिभयङ्कर-वज्रनख-श्रीपति-नीलकण्ठप्रभृतयो वीरमाहेश्वरसिद्धान्तकोविदाः" रेवणसिद्ध-मरुलसिद्ध-एकोरामसिद्ध पण्डिताराध्य-विश्वाराध्या इति वीरमाहेश्वराचार्या वीरमाहेश्वरसिद्धान्तमतप्रवर्तकाश्च क्रमशः समभवन् । तेषां रेवणसिद्धादिशिवाचार्याणां समयस्तु वक्तुमशक्य इयानेवेति । पुराणः सनातन इत्यर्थः । अत्र सुप्रभेद-वीर-स्वायम्भुवादिश्रुतयः प्रमाणं । ताहि श्री रेवणसिद्धादिमहाचार्यसार्वभौमाः श्रीसोमेश्वरादिविभुलिङ्गेभ्य आविर्भूय मुनिकुलाग्रगण्यानगस्त्यप्रमुखमहर्षिगणान् नरसार्वभौमान् शिवसिद्धान्तोपदेशदानादितश्चोद्धारयामासुरिति संघोषयन्ति । तत्तदाचार्यमहापीठेषु ( मठेषु ) पुरातनशिलाताम्रभूर्जलेखनान्यपि कलेः प्रारब्धाब्दतः प्रायोऽतितरांचसमुल्लसन्ति, प्रसङ्गतोऽन्यत्रविस्तरामः प्रकृतमनुसरामः सम्प्रति । तत्तदाचार्यवर्यप्रणीतलात्वेदोपनिषत्सूत्राणामुपरि शैवभाष्यवृत्तिग्रन्था अपि सन्तिप्रोद्दामाः । साम्प्रतिकानां कलिप्रभावमूर्छितानामश्रद्धया केचन ग्रन्था देवनागरीलिप्यामसुद्रिताः सन्ति । अतः श्रीकाशीविद्वद्वीरमाहेश्वरसभाश्रीकेदारनाथशिवतत्वग्रन्थमालायाः प्रथमं पुष्पमित्यादिनामतः प्राचीन-

ग्रन्थाः क्रमशः प्रकाशिता भूयांसः । येन विश्वतः शिवभक्तिः स्थिरीभूय शिवाचार्याणां सिद्धान्तप्रसारोऽपि संजायेतेति कतिपयैर्मित्रवर्यैः पण्डितगणैः प्रेरिताः स्मः । तदा सिकन्दराबादपुरि [ १७९७ ] शालिवाहनशकाब्दे कर्णाटलिप्यां मुद्रितः श्रीवृषभेन्द्रपण्डितशिवाचार्यप्रणीत श्रीशैव भाष्योपेत महानारायणोपनिषन्नामकग्रन्थः श्रीकाशीजंगद्गुरुविश्वाराध्यपीठाऽस्थान-पण्डित श्रीभालाक्षशास्त्रिमहोदयसकाशादेतल्लिप्यां प्रकाशनार्थमस्मद्धस्त-मुपागतः । ग्रन्थे तत्र बह्वृचामेकत्रैव भाष्यलेखनास्तित्वतया पाठकानां परि-श्रमः संजायत इति समालोच्येदानीमेकैकऋचां भाष्यं पृथक् कृत्वा यथा मति संशोध्य श्रीकेदारसिंहासनाधीश श्रीजगद्गुरु नीलकण्ठलिंगशिवाचार्य ( रावलोपाह्व ) भगवत्पादानामुदाराश्रयेणासौ मुद्रापितः कलहंसप्रकृति-कानां विज्ञानां सविधे सन्निहितोऽस्तितराम् । सन्तश्चैनं ग्रन्थं समालोक्य सन्तुष्टाः सम्भूय सम्प्रसूनवतीमेनां भगवतीं भवदीय श्रीकेदारनाथशिवतत्व ग्रंथमालाभिधेयां साध्वीं सम्पोष्य सम्वर्ध्य सम्भविष्यमाणानि पुष्पाणि तदीयानि च समास्वादयन्त्वुत्तमां । प्रसीदतु भवानीभर्ता श्रीकेदारेश्वरोऽनेन व्यापारेणास्मदीयेनेत्याशासाना विरमन्ति सुधा विस्तरत इति । शम् ।

पं० श्रीचिद्घनशिवाचार्याः

श्रीनृपशालिवाहनशकाब्दीय ( १८९० )

शुक्लसंवत्सर वैशाखशुदि

अक्षयतृतीयायां

श्रीमदेकोरामजगदाचार्यजयन्त्युत्सवे



श्री वीरमाहेश्वरसिद्धान्तप्रतिष्ठापनाचार्य-
श्री १००८ जगद्गुरु पञ्चशिवा-
चार्याणां प्रादुर्भावः

ॐ नमः शिवाय



ॐ नमः श्री १०८ जगद्गुरु पञ्चाचार्येभ्यः

श्रीशैवभाष्योपेता

# महानारायणोपनिषत्

## नारायणोपनिषन्नामककूचिरुद्रप्रारम्भः

मूलम्—अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्। शुक्रेण ज्योतींषि, समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः ॥ १ ॥

भाष्यादौ मङ्गलम्—श्रीमच्चन्द्रकलाधरं भवहरं श्रीशाद्रिपं शंकरं । वेदान्तोभयवेद्यमव्ययमजं वेदादिविश्वात्मकम् ॥ मायातीतमनादिबोधममृतं मृत्युञ्जयं सर्वगं । गंगालोलमनन्तवैभवयुतं गौरीधवं नौम्यहम् ॥ १ ॥ वामे हैमसुता शिलादतनयस्त्वग्रे महेन्द्रादयः । पश्चाद्विष्णुविरिञ्चिमुख्यदिविजाः प्राग-

दिकोष्ठादिषु। श्रीविघ्नेश्वरवीरभद्रगुहशास्तृभृङ्गिचण्डादयो। मध्येचन्द्रशतप्रभामयतनुं शम्भुं भजे शाश्वतम् ॥ २ ॥ सर्ववेदान्तसिद्धान्तद्वताद्वैतमताधिपं। भवभक्तनिधिं भव्यं भजे श्रीपतिपण्डितम् ॥ ३ ॥

सर्ववेदवेदान्तप्रतिपाद्यस्य। सर्वाधिष्ठानस्य सर्वात्मकस्य परशिवस्य ब्रह्मणो महादेवस्य, पारम्यं। नारायण नामकपञ्चमाध्याये प्रतिपाद्यते। नारायणऋषिप्रोक्तत्वात्। शिवभक्ताग्रगण्यनारायणहृदये परमेश्वरोपासनाप्रतिपादनाद्वा नारायणोपनिषदिति संज्ञा समञ्जसा भवति ॥ अम्भस्यपारेत्यादिना ॥ अपारे अम्भसि। समुद्रे स्थित इति शेषः ॥ "यो रुद्रो अग्नौ य अप्सुय ओषधीषु यो रुद्रो भुवनान्याविवेश तस्मै रुद्राय नमो अस्त्विति श्रुतौ, एतद्वाक्यार्थः स्पष्टमुपदिश्यते। अतो न विष्णुपरत्वमस्योपक्रमवाक्यस्य सिध्यति। भुवनस्य मध्ये, लोकमध्ये, नाकस्य पृष्ठे। सर्वोर्ध्वभागे। आकाशादिभ्यो महानित्यर्थः। शुक्रेण। स्वतेजसा। ज्योतिंषि। सूर्यादिज्योतींषि। अनुप्रविष्टः। अन्तर्यामित्वेन स्थित्वा प्रकाशयतीति भावः ॥ "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति॥ तच्छुभ्रं ज्योतिषां ज्योतिस्तत्तद्‌ात्मविदोविदुरित्यादि श्रुतिषु तथा श्रूयते"। प्रजापतिश्चतुर्मुखः। गर्भेअन्तः। गर्भमध्ये। चरति। सञ्चरति। सर्वजीवान्तरसृष्टिकारणभूतचतुर्मुखस्य। परमेश्वरगर्भचालनव्यपदेशात्तस्य ॥ स्थावरजङ्गमात्मकसर्व प्रपञ्चाधिष्ठानत्वं ॥ समुद्रादिसर्वस्थलस्थिति व्यपदेशेन सर्वात्मकत्वं सर्वान्तर्यामित्वंचोपदिष्टं भवति ॥ तथाश्वेताश्वतरे। 'सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ॥ सर्वव्यापीच भगवान् तस्मात्सर्वगतः शिव इति श्रूयते'। 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यतेति

श्रुत्यन्तरे" । तथा श्रूयते ॥ उत ॥ अपारेऽम्भसि । महाप्रलये । श्लो ॥ प्रलये वटरूपेण निवसन्शशिशेखरः ॥ स्वशाखाग्र-स्थिते पर्णे हरिं धत्ते कृपानिधिरितिशैव—पुराणवचनरीत्या-तत्र वटरूपेण स्थित इत्यर्थः ॥ भुवनस्य मध्ये अन्तरिक्षे सूर्यात्मनावर्तत इत्यर्थः ॥ तथा शतरुद्रीये ॥ असौ योवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृशन्नदृशन्नु-दहार्यः इति । स्पष्टमुक्तं । नाकस्य पृष्ठे । स्वर्गादूर्ध्वभागे । इदं वैकुण्ठादीनामुपलक्षणं । महाकैलास इत्यर्थः । "परात्परतरं ब्रह्म तत्परात् परतोहरिः । यत्परात्परतोईशस्तन्मे मनः शिवसङ्कल्प मस्त्विति श्रुत्यन्तरे" । शिवस्य सर्वदेवताधिकत्व व्यपदेशात्त-न्निवासभूतमहाकैलासस्य सर्वोर्ध्वभागस्थितिरनवद्यति भावः । तथा भगवता व्यासेन स्कान्द-लैङ्ग्यादिषु वहुधा प्रपञ्चितं । ग्रन्थविस्तरभयान्नलिख्यते ॥ महतो महीयान् । सर्वदेवता-धिकब्रह्मविष्णु महेन्द्राणामधिप इत्यर्थः । तथा श्वेताश्वतरे ॥ "तमीश्वराणां परमं महेश्वरं । तं देवतानां । परमं च दैवतं । पतिं पतीनां परमं परस्तात् । विदामदेवं भुवनेशमीड्यं । नतस्य कार्यं करणं च विद्यते । न तत्समश्चाप्यधिकश्चदृश्यतेतिश्रूयते, । 'अहमेकः प्रथममासं वर्तामिच भविष्यामिचेति अथर्वशिरसि तथा श्रूयते, ॥ शुक्रेणेति' स्वतेजसा सूर्यादिज्योतींषि प्रकाशय-तीत्यर्थः । प्रजापतिरिति । चतुर्मुखस्यापि जनक इत्यर्थः तथा श्वेताश्वतरे । 'योदेवानां प्रभवश्चोद्भवश्च । विश्वाधिको रुद्रो महर्षिः, हिरण्यगर्भं पश्यत जायमानं सनो देवश्शुभयास्मृत्या संयुनक्तु, नारायणे च ' यो देवानां प्रथमं पुरस्ताद्विश्वाधियो-रुद्रोमहर्षिः । हिरण्यगर्भं पश्यत जायमानं सनोदेवः शुभया-स्मृत्या संयुनक्तु । इतिस्पष्टमुपदिष्टं । इति प्रथमानुवाक प्रथम वाक्य भाष्यं समाप्तम्" * "

मूलम्—यस्मिन्निदं सञ्च विचैति सर्वं ॥ यस्मिन्देवा अधि विश्वेनिषेदुः ॥ तदेव भूतं तदु भव्यं मा इदं तदक्षरे परमे व्योमन् ॥ २ ॥

भाष्यम्—यस्मिन्निति ॥ यस्मिन् परमशिवे । इदं । चराचरात्मकं विश्वं । सञ्च प्रलये समेति । समित्येकाकारे । नामरूप विभागानर्हतया तस्मिल्लीनं भवतीति भावः । विचैति । सृष्टिकाले । नामरूपविभागार्हतया स्थूलावस्थां प्राप्नोतीत्यर्थः । पटवच्चतिसूत्रे । प्रलये प्रपञ्चस्य । पटसङ्कोचवत्सङ्कुचितत्वं । तद्वत्सृष्टौविस्तृतत्वं च परमेश्वरेण क्रियत इत्युक्तं । यस्मिंश्च । यस्मिन्परमशिवे । देवाः । विष्णुब्रह्मादयः । अधिनिषेदुः । स्थिताः । आश्रिता इत्यर्थः । शिवगीतासु विश्वरूपाध्याये बहुधा प्रपञ्चितमेतत् । तदेव । परशिव एव । भूतं तत् उ । तदु । तदेव । भव्यं । अइदं । इदं परिदृश्यमानं । आ । तदेवेत्यर्थः । सर्वं परमात्मभूतमित्यर्थः । इदमित्यत्र । आ इत्यस्य स्मरणार्थत्वान्निपात एकाजनाङितिप्रगृह्यत्वात्प्रकृतित्वं । तथा श्रुतिः । “विश्वं भूतं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्त्विति,, ॥ श्रुत्युक्तरीत्या—

सर्वात्मभूतः परशिवएव । तत् । परशिवः । अक्षरे । नाशाप्रतियोगिनि । नाशरहितेत्यर्थः । परमे व्योमन् । स्वाभाविक चिच्छक्त्यात्मकपरमाकाशे वर्तत इत्यर्थः ॥ अर्भकौकस्थात्तव्यपदेशादिति ब्रह्मसूत्रे भगवता बादरायणेन सर्वव्यापकस्य परमेश्वरस्य भक्तोपसनार्थं परमाकाशेस्थितिरुपदिष्टा । इति द्वितीयवाक्य भाष्यं समाप्तम् ॥

मूलम्—येनावृतं खं च दिवं महीं च । येनादित्यस्तपतितेजसा भ्राजसा च ॥ यमन्तः समुद्रे

कवयोऽवयन्ति तदक्षरे परमे प्रजाः ॥ ३ ॥

भाष्यम्—येनावृतमिति ॥ येन । शिवेन । आकाशो द्यौश्च महीच । अव्रियते । विभक्तिव्यत्यासश्छान्दसः । कैवल्ये ॥ खंवायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ यत्परंब्रह्म सर्वात्माविश्वस्यायतनं महदिति तथा श्रूयते, । येनच । भ्राजसा । औष्णेन । तेजसा । प्रकाशेन च । आदित्यस्तपति । सूर्यतेजोऽवच्छिन्नः सन् स्वतेजसा । आदित्यरूपेण प्रकाशयतीति भावः। "येन सूर्यस्तपतितेजसेत्थमिति श्रुतेः" । यंच । कवयः । प्रजाः । शिवज्ञानिन इत्यर्थः । मुद्रयासह वर्तत इति समुद्रे । समुद्रेण । गुरूपदिष्ट लक्ष्येण । वचन व्यत्ययश्छान्दसः ॥ अन्तः । "शरीरमध्ये पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखं । अधोनिष्ठया वितस्यान्ते नाभ्यामुपरितिष्ठतीतिश्रुतौ, । तथा स्पष्टमुक्तं । अक्षरे नाशरहिते । परमे । हृदयाकाशे । अवयन्ति । प्राप्नुवन्ति । तद्ब्रह्मेति पूर्वेणसम्बन्धः । अत्र आकाशवत्सर्वव्यापकत्वादिधर्मप्रतिपादनात् । समुद्रे इत्यत्र समुच्चयबोधक चकाराभावाच्च । सावयवब्रह्मणः । समुद्रे वैकुण्ठे च । अभिगच्छन्तीत्यर्थो निराकृत इतिज्ञेयं । किंच । संसारदशायां जीवब्रह्मणोर्भेदः स्वाभाविकः । मोक्षदशायां पुनरावृत्तिरहिताभेदश्च युक्त इति स्पष्टीकृतोऽर्थः॥ इति तृतीयवाक्यभाष्यं समाप्तम् ॥

मूलम्—यतःप्रसूता जगतः प्रसूती तोयेन जीवान्व्यससर्ज भूम्याम् " यदोषधीभिः । पुरुषान्पशूँश्च विवेश भूतानि चराचराणि ॥४॥

भाष्यम्—यतः प्रसूतेति ॥ यतः । महाप्रलयसाक्षिभूतपरशिवात् । जगतः । स्थावरजङ्गमात्मकप्रपञ्चस्य प्रसूती उत्पत्ति-

विशिष्टा । कारणभूता प्रकृतिरित्यर्थः । प्रसूता उत्पन्ना । येन परशिवेन भूम्यां । भूमौ । तोयेन । तोयशब्दोपलक्षितभूतैः सह । जीवान् । ब्रह्मविष्णवादीन् व्यससर्ज । सृष्टवान् । यत् । परशिवः ओषधीभिः । पुरुषान्, मनुजान् पशूंश्च । गवाश्वादीन् । चराचराणि । स्थावरजङ्गमात्मकानि । वृक्षगुल्मलतापक्षिपिपीलिकादीनीत्यर्थः । विवेश । अन्तर्यामितया प्रविष्टवानित्यर्थः । "तत्सृष्ट्वातदेवानुप्राविशदितिश्रुतेः" । तद्रीत्या ब्रह्मादिस्तम्भपर्यन्तं सृष्ट्वा तदन्तर्यामित्वेन सर्वत्र प्रकाशतेत्यर्थः। "ध्यायीतेशानं प्रध्यायितव्यं । सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते । सर्वाणिचेन्द्रियाणि सह भूतैर्नकारणं । कारणानां ध्याता । मायान्तु प्रकृतिं विन्द्यान्मायिनन्तु महेश्वरं । तस्यावयव भूतैस्तु व्याप्तं सर्वमिदं जगदित्यथर्वशिखाश्वेताश्वतरादिषु" शिवस्य परब्रह्मणः । त्रिमूर्तिकारणत्वं, चराचरप्रपञ्चकारणत्वं च प्रतिपादनान्न नारायणपरत्वमयं वाक्यार्थः ॥ ४ ॥

मूलम्—अतः परं नान्यदणीयसँहि परात्परं यन्महतो महान्तं । यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ॥ ५ ॥

भाष्यम्—अतः परमिति ॥ परात्परं, परात्, ब्रह्मविष्णुरुद्रेभ्यः । परं, श्रेष्ठं । 'शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा-सविज्ञेय इतिमाण्डूक्ये श्रूयते' । महतो । आकाशादिभ्यो । महान्तं । महदित्यर्थः । अतः परं, तस्मात्परं । अणीयसँ हि । अणुतरं वा । अन्यत् । अन्यं । न । नास्ति । ततः सूक्ष्मतरं नास्तीत्यर्थः । तथा कैवल्ये ॥ 'अणोरणीयानहमेव तद्वन्महानहं विश्वमिदं विचित्रं । पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मीति, श्वेताश्वतरे च "यस्मात्परं नापरमस्ति कि-

श्चिद्यस्मान्नाणीयो न ज्यायोऽस्तिकश्चिदिति श्रूयते" ॥ यदेकमिति । एकं । अद्वितीयं ॥ "एकएवरुद्रो नद्वितीयाय तस्थेत्यादि श्रुतिषु । अनन्यसाम्यत्वं शिवस्यस्पष्टमुपदिष्टं ॥ अव्यक्तं । चक्षुरादीन्द्रियाविषयमित्यर्थः । अनन्तरूपं । नानारूपमित्यर्थः । न विद्यते अन्तो यस्य तत् । अनन्तं । अनन्तरूपं यस्य तदनन्तरूपं । अप्राकृतदिव्यमङ्गलविग्रह इत्यर्थः ॥ "स्थिरेभिरङ्गैः पुरुरूप उग्र इतिश्रुतेः" ॥ विश्वं । विश्वात्मकं । "सर्वोह्येषरुद्र इतिश्रुतेः" । पुराणं । अनादिं । 'पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मीतिश्रुतेः, । तमसः । परस्तात् महाप्रलयसाक्षितमोरूपप्रकृतिविलक्षणो वा ॥ 'यदातमस्थं न दिवा न रात्रिर्नसन्न चासच्छिव एवकेवलः । वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तादिति श्वेताश्वतरे, । 'उमासहायं परमेश्वरंप्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तादिति" कैवल्ये च शिवस्य परब्रह्मणः । तमःपरत्वव्यपदेशान्न नारायणपरत्वं वक्तुं शक्यं इति प्रथमानुवाकपञ्चमवाक्यभाष्यं समाप्तम् ॥

मूलम्—तदेवर्तन्तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम् । इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः ॥ ६ ॥

भाष्यम्—तदेवर्तमिति ॥ ऋतं । ज्ञानविषयस्वरूपं । सत्यं । कालत्रयाबाध्यस्वभावं । तदेव । तत्परशिवएव । कवीनां । शिवज्ञानिनां । परमंब्रह्म । मूर्तित्रयातीतब्रह्म । तदेव, शिवएव ॥ इष्टेति ॥ इष्टं च पूर्तंचेति समाहारद्वन्द्वं । इष्टं 'यागादि श्रौतकर्म' पूर्तादि स्मार्तकर्म । बहुधा । अनेकधा । जातं,

भूतं । जायमानं भविष्यत् । विश्वं । अग्नीन्द्रादि देवतान्तर-सम्बन्धितया बहुरूपं । पूर्वोक्तकर्म । विभर्ति । स्वीकरोति । तदाराध्य इतिभावः ॥ भुवनस्य । सर्वलोकस्य, नाभिः, कर्म-फलप्रदातृत्वेन तदाधारभूत इत्यर्थः ॥ 'एकोदेवस्सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा, कर्माध्यक्षस्सर्वभूताधिवासः साक्षी चेता केवलोनिर्गुणश्चेति श्वेताश्वतरे सर्वकर्माध्यक्षत्वं शिवस्य परब्रह्मणः सम्यगुपदेशान्नारायणपरत्वं नसिध्यतीति प्रथमानुवाकषष्ठवाक्यभाष्यं समाप्तम् ॥

मूलम्—तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः ।
तदेवशुक्रममृतं, तद्ब्रह्मतदापस्सप्रजापतिः ७

भाष्यम्-तदेवाग्निरिति ॥ तदेव परशिवएव । अग्निः । तत् । वायुः । तत् । सूर्यः । तदु । तत् । चन्द्रमाः । तदेव । शुक्रं । त्रिगुणातीतशुद्धसत्वप्रधानं । अमृतं । मृत्युञ्जयं । तत् ब्रह्म । चतुर्मुखः । तत् । आपः । तदधिष्ठानवरुणइत्यर्थः, सः । प्रजानांपतिः । प्रजापतिः । प्रजापालनकर्ता विष्णुरित्यर्थः, सर्वत्र तच्छब्दः । शिवएव, सर्वदेवता स्वरूप पर ब्रह्मेतिनिश्चयार्थकः । कैवल्ये उमासहायमित्यारभ्य । सएव विष्णुः सप्राणः सकालोऽग्निस्सचन्द्रमाः ॥ सएव सर्वंयद्भूतं यच्च भव्यं सनातनं ज्ञात्वातन्मृत्युमत्येतिनान्यः पन्थाविमुक्तयेत्यादिना शिवस्य परब्रह्मणः सर्वदेवतामयत्वं, तदुपासनस्यैव मोक्षप्राप्तिसाधन-त्वोपदेशान्न नारायणपरत्वं वक्तुं युक्तमिति शिवस्य परब्रह्मणः सर्वात्मकत्वसर्वविलक्षणत्व-सर्वाधिकत्व सर्वकारणत्वमुपदिश-दितिप्रथमानुवाकसप्तमवाक्यभाष्यं समाप्तम् ॥

मूलम्—सर्वे निमेषा जज्ञिरे, विद्युतः पुरुषादधि ॥
कला मुहूर्ताः काष्ठाश्चाहोरात्राश्चसर्वशः ॥

अर्धमासा मासा ऋतवस्संवत्सरश्च कल्प-
ताम् ॥ ८ ॥

भाष्यम्—सर्वे निमेषा इति ॥ विद्यतः विद्युत्स्वरूपात् । पुरुषात् । हिरण्मयपुरुषादित्यर्थः ॥ निमेषा अधिजज्ञिरे । जाता इत्यर्थः । कला मुहूर्ताः काष्ठाश्च । अहोरात्राश्च सर्वशः सर्वे अर्धमासाः शुक्लकृष्णपक्षाः मासाः चैत्रादयः ऋतवः संवत्सरादयः प्रभवाद्याः । कल्पतां सृष्टा इत्यर्थः ॥ इति प्रथमानुवाकाष्टमवाक्यभाष्यं समाप्तम् ॥

मूलम्—स आपप्रदुघो उभे इमे अन्तारिक्षमथोसुवः
नैनमूर्ध्वं नतिर्यञ्चं न मध्ये परिजग्रभत् ॥९॥

भाष्यम्—स आप इति ॥ स आपः द्वितीयार्थे प्रथमा अप इत्यर्थः । प्रदुघो दुग्धे । अपूशब्दोपलक्षितभूतपञ्चकमुत्पादितवानित्यर्थः । तथा । अन्तरिक्षं । अथोसुवः । तदधो भागस्थित सुवश्शब्दोपलक्षितभूरादिलोकं च । उभे सृष्टवानित्यर्थः । नैनमूर्ध्वमिति । एनं । ऊर्ध्वंऊर्ध्वभागे । तिर्यञ्चं । तिर्यक्प्रदेशे मध्ये मध्यप्रदेशे । कोऽपिनपरिजग्रभत् नगृहीतवानित्यर्थः नज्ञातवानितिभावः ॥ छान्दसत्वाद्धकारस्य भकारादेशः । सर्वव्यापकस्य देशकालवस्तुकृतपरिच्छेद्यत्वं नास्तीति भावः । न तस्येशे तस्य ईशे ईशः वचनव्यत्ययश्छान्दसः कश्चनकोऽपि न नास्ते । 'नतस्य कार्यं करणं च विद्यते नतत्समश्चाप्यधिकश्च दृश्यत इति श्वेताश्वतरे तथोक्तं, । तस्य महत् । सर्वेश्वरत्व सर्वान्तर्यामित्वसर्वाधिष्ठानत्व सर्वकारणत्वादिरूपं यशः, कीर्तिः नाम प्रसिद्धः । नान्यस्यसम्भवतीतिभावः । किंच । तस्य परमेश्वरस्य । नाम शिव इतिनाम महद्यशः । महामङ्गलरूप इत्येकोऽर्थः । इति प्रथमानुवाके नवमवाक्यभाष्यं समाप्तम् ॥

मूलम्—नसन्दृशे तिष्ठतिरूपमस्य न चक्षुषा पश्यति कश्चनैनं । हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ॥ १० ॥

भाष्यम्—नसन्दृशेति ॥ अस्यशिवस्यरूपं सन्दृशे दृष्टौ न तिष्ठति । प्राकृतचक्षुषा न वेद्यमित्यर्थः । अतएव कोऽपि । चक्षुषा इदमुपलक्षणं बहिरिन्द्रियाणां । तैरित्यर्थः । एनं शिवं न पश्यति । नगृह्णातीत्यर्थः । किन्तु हृदेति । हृदा श्रद्धाभक्तिध्यान युक्तेन मनीषा शिवज्ञानविशिष्टेन मनसा अन्तःकरणवृत्या-अभिक्लृप्तः । गृहीतुं शक्य इत्यर्थः । "एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयं, आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेत्यादिषु, तथा स्पष्टमुक्तम् ॥ १० ॥

मूलम्—अद्भ्यः सम्भूतो हिरण्यगर्भं इत्यष्टौ एष हिदेवः प्रदिशोनुसर्वाः पूर्वोहिजातः स अगर्भे अन्तः स विजायमानस्स जनिष्य-माणः प्रत्यङ्मुखास्तिष्ठाति विश्वतो मुखः ॥

भाष्यम्—अद्भ्यः सम्भूत इति ॥ अद्भ्यः सम्भूत इत्युत्त-रानुवाकः । हिरण्यगर्भं इत्यष्टत्वं तदेकवाक्यमापन्नमिहपठित व्यमित्यर्थः । एष हीति । एषहि देवः । एष परः शिवः । प्रदिशः प्रतिदिशः । अनुसर्वाः । अनुसृत्यवर्तमानसर्वपदार्थाः गर्भेऽन्तः । गर्भस्था पूर्वोहिजाताः । पूर्वं जाता इत्यर्थः । विजायमानः । वर्तमानकालोत्पन्नाः । जनिष्यमाणाः । भविष्य-त्कालोद्यमानाः । सर्वं स एव हि शब्दः सर्वत्र निश्चयार्थः । तच्छब्दस्य आवृत्तिरपि तदर्थमेव । तद्भिन्ननारायणस्य सम्भव-तीत्यर्थनिरासार्थं हिस्यात् । "पुरुषोवैरुद्रस्तन्महो नमो नमः

विश्वं भूतं चित्रं बहुधाजातं जायमानं च यत् । सर्वोह्येष रुद्रस्तन्मे रुद्राय नमोनम इति मन्त्रान्तरे शिवस्य सर्वात्मकत्वं स्पष्ट मुपदिष्टम् ॥ प्रत्यङ्मुखाइति ॥ प्रत्यक् विश्वभिन्नं मुखं शरीरं यस्य सः प्रत्यङ्मुखः । त्रिगुणातीतशुद्धसत्वप्रधान इत्यर्थः । तादृशः सन् विश्वतो मुखः । चराचरोक्तकाष्ठमूर्तस्वरूपवानित्यर्थः । एतेन चराचरविश्वात्मकत्वान्मूर्तत्वं तद्विलक्षणशरीरकत्वादमूर्तत्वं च । यद्वा विश्वतोमुखः । चराचरस्वरूपत्वात्सर्वव्यापकस्वरूपः।प्रत्यङ्मुखं । प्रत्यङ्मितानि मुखानि शिखाः तेषु तिष्ठतीति वार्थः । अत्र पूर्वार्थे च वचनव्यत्ययश्छान्दसः । एतदर्थे विभक्तिव्यत्ययश्छान्दस । इति ज्ञेयम् ॥

इति प्रथमानुवाके एकादशवाक्यार्थः समाप्तः ॥

मूलम्—विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो हस्त
उत विश्वतः पात् । सं बाहुभ्यां नमति
सम्पतत्रै र्द्यावा पृथिवी जनयन्देवएकः १२

भाष्यम्—विश्वतश्चक्षुरिति ॥ विश्वतश्चक्षुः । अनन्तनेत्रवान् । उत । किंच । विश्वतोमुखः । अपरिमितमुखवान् । विश्वतो हस्तः । असंख्यातहस्तवान् । विश्वतः पात् । अगणितपादवानित्यर्थः । देव एकः । एकोदेवः । शिवः । द्यावापृथिवी जनयन् । आकाशभूमी उत्पादयन् । बाहुभ्यां हस्ताभ्यां पतत्रैश्चरणैश्च नमति । योजयति । स्रष्टेनाजीवानां पादादिकरणविशिष्टस्थूलशरीरसंयोगं करिष्यतीतिभावः । विश्वतश्चक्षुरुत विश्वतोमुख इत्यारभ्य योदेवानांप्रथमश्चोद्भवश्च विश्वाधिकोरुद्रो महर्षिरित्यन्तंश्वेताश्वतरे । शिवस्य विश्वतोमुखत्वादिधर्माणां व्यपदेशादत्र न नारायण परत्वावकाश ॥ इतिद्वादश वाक्यभाष्यं प्रथमानुवाके समाप्तम् ॥

मूलम्—वेनस्तत्पश्यन्विश्वाभुवनानि विद्वान्यत्र वि-
श्वं भवत्येकनीडं यस्मिन्निदं संच विचैति
सर्वं सजीतः प्रोतश्च विभुः प्रजासु ।। २३ ॥

भाष्यम्—वेन इति ॥ हि इनः तत् इति पदविभागः । विद्वान् सर्वज्ञः । तत् । परशिवः विश्वाभुवनानि । स्थावरजङ्गमानि । अत्र हिशब्दोपमावाचकः । इन इव मित्रवत् पश्यन् साक्षात्कुर्वन् आस्ते तिष्ठति । यत्रपरशिवे विश्वमिदं । परिदृश्यमानस्थावरजङ्गमात्मकप्रपञ्चं । एकनीडं । एकाधिकरण्यं । एकाधिष्ठानमित्यर्थः । भजत इति शेषः । यस्मिन्निदमिति ॥ यस्मिन् । परशिवे । इदं सर्वं चक्षुर्विषयीभूतसकलप्रपञ्चं । संच । प्रलये पटनं भवत्सूक्ष्मत्वं भजति । विचैति । सृष्टौ पटप्रसारणवत् स्थूलावस्थां प्राप्नोति । विभुः सर्वमूर्तामूर्तसंयोगी । सः । शिवः । एतेन शिवस्य ब्रह्मणः सदामूर्तत्वप्रधानवादो निरस्तः । प्रजासु चेतनसमुदायेषु । जीतः । दीर्घप्रसारिततन्तुवत् । प्रोतः तिर्यक् प्रसारित तन्तुवच्च व्याप्य वर्तत इतिशेषः ॥ इति त्रयोदशवाक्यभाष्यं समाप्तम् ॥ १३ ॥

मूलम्—प्रतद्वोचे अमृतेन्नु विद्वान्गन्धर्वो नाम ।
निहितं गुहासु यस्तद्वेद स पितुःपिता सत् १४

भाष्यम्—प्रतद्वोचेति । प्रतत् । वोचे इति पदविभागः । गां सर्वातिशयफालनेत्रं । गंगां । वृषभं पाशुपतास्त्रंवा धारयतीति गन्धर्वः । शिवः । मुख्यार्थस्तु गांवृषभं वाहनत्वेन धारयतिस्वीकरोतीति गन्धर्वः । सर्वेषुपशुवाग्वज्रदृङ्नेत्रघृणिभूजल इति कोशात् । उत । गांदिक् धारयति । अम्बरत्वेन धारयतीति वा गन्धर्वः । दिगम्बर इति शिवसहस्रनामावल्यांतस्य प्रसिद्धम् ॥ नाम । तत् । परशिवः । अमृतंमोक्षात्मकः । मृत्युञ्जयोहि ।

नविद्यते मृतं यस्यासौ अमृतः । एतेन नारायणादीनां मृत्यु-ग्रस्तत्वं सूच्यते अत एवलोके । ब्रह्मकल्प विष्णुकल्पप्रसिद्ध नाम शब्द समुदायवेदं गुहासु । बुद्धिहृदयादिस्थानेषु निहितं स्थितं । ब्रह्मऐतिशेषः । प्रवोचे । प्रोक्तवानित्यर्थः । तथाश्वेता-श्वतरे ॥ प्रधान क्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः । स तन्मयोह्यमृत ईशसंस्थोज्ञः सर्वज्ञोभुवनस्यास्यगोप्ता यईशे अस्य जगतो नित्यमेव नान्यो हेतुर्विद्यते ईशनाय योब्रह्माणं विदधाति पूर्वंयो वै वेदांश्च प्रहिणोति तस्मै तँहि देवमात्म बुद्धिप्रकाशगुं मसुक्षुर्वै शरणमहं प्रपद्येति स्पष्टमुपदिष्टम् ॥ अतो न नारायणस्यात्रावकाशः । त्रीणि पदानीति गुहासु हृदय भ्रूमध्यस्थानेषु त्रीणि पदानि । जीवप्रकृति परमेश्वराधिष्ठित-स्थानानि यः पुरुषः । वेद जानाति । शिवयोगेन । सः । पितुः पिता । कस्यापि पुत्रो न भवतीत्यर्थः पुनर्जन्म नास्तीति भावः । सत् भवति । परमात्मतया तिष्ठतीति भावः ॥ इति चतुर्दशवाक्य भाष्यं समाप्तम् ॥

मूलम्—सनो बन्धुर्जनिता विधाता धामानि वेद
भुवनानिविश्वा यत्र देवा अमृतमानशना-
स्तृतीये धान्यभ्येरयन्त ॥ १५ ॥

भाष्यम्—सनोबन्धुरिति ॥ स शिवः । नः । अस्माकं । बन्धुः । जनिता । जनकः । रुद्रपिण्डजन्यत्वेन सर्वेषां रुद्रएव जनक इत्यर्थः । स एव श्रेयसां । विधाता । जनयिता । गर्भद-शायामपि । सर्वेषां । जीवनोपायं करोति यस्मात्तस्मात्स एव परमबन्धुरित्यर्थः । "योमे गर्भगतस्यापि वृत्तिं कल्पितवान्शिव इतिस्मृतेः" । यत्रदेवाइति ॥ यत्र परशिवे । अमृतं । मोक्षं । आनशनाः अशनवन्तः । अनुभूतवन्त इत्यर्थः । तृतीये धामनि ।

सहस्रारे । कैलासे वा । अभ्येरयन्त । महानन्दानुभवमुच्चरन्तीत्यर्थः ॥ स्वकृतकृत्यं गायन्तीति भावः ॥ इति पंचदश वाक्य भाष्यं समाप्तम् ॥

मूलम्—परिद्यावा पृथिवी यान्ति सद्यः परिलोकान् परिदिशः परिस्तुवः ऋतस्य तन्तुं विततं निचृत्य तदपश्यत्तदभवत्प्रजासु ॥ १६ ॥

भाष्यम्—परिद्यावापृथिवीति ॥ सर्वान् लोकान् कामान्नि कामरूप्यनुसंचरन्नित्युक्तरीत्या ॥ द्यावापृथिवी । आकाशभूमी । परियन्ति । परितः संचरन्ति । परिलोकान् । लोकान् । स्वर्गादिलोकान् । सद्यः । तत्कालएव । परिपरियन्तीत्यर्थः । यन्तीतिक्रियापदस्य परीत्युपसर्गेण सर्वत्रान्वयः । परिस्तुवः । स्तुवः शब्दितमहाकैलासं च संचरन्ति ॥ * * ॥

मूलम्—परीत्यलोकान् परीत्यभूतानि परीत्यसर्वाः प्रदिशो दिशश्च प्रजापतिः प्रथमजा ऋतस्यात्मनात्मानमभिसम्बभूव ॥ १७ ॥

भाष्यम्—परीत्यलोकानिति ॥ लोकान् । जनान् । भूतानि । पंचभूतानि । प्रदिशो दिशश्चसर्वाः । दिगन्तराणि । तत्रस्थपदार्थांश्च परीत्य व्याप्य ॥ परीत्येति त्रिरावृत्तिर्निश्चयार्थं ॥ प्रजानां । पश्वात्मकजीवानां । पतिः । प्रजापतिः । पशुपतिरित्यर्थः । ऋतस्य । कर्मणः । प्रथमजाः । प्रथमं जनयिता । सृष्टेः पूर्वं । तत्तत्कर्मपरिपाकं पश्यन् । स्वयमेव । आत्मना । स्वेन । आत्मानं । जीवं । अभिसम्बभूव । उत्पादितवान् । सृष्टौकुसूल-

ध्यान्यवत्स्वात्मस्थितजीवाविर्भावं करोतीतिभावः ॥ तत्तत्कर्मा नुकूलत्वेन तत्तच्छरीराणि दास्यत्यतस्तस्य वैषम्यादिकं नास्तीतियावत् ॥ १७ ॥ इतिसप्तदशवाक्यभाष्यं समाप्तम् ॥

मूलम्—सदसस्पतिमद्भुतं प्रियमिन्द्रस्यकाम्यं सनिं-
मेधामयासिषम् ॥ १८ ॥

भाष्यम्—सदसस्पतिमिति ॥ सत् । जीवः । असत् । प्रकृतिः । तयोःपतिं । प्रभुं । "प्रधानक्षेत्रज्ञपतिगुंणेशः संसारमोक्षस्थितिबन्धहेतुरिति श्वेताश्वरेतथाश्रूयते" ॥ अद्भुतं । ब्रह्मविष्ण्वादीनामाश्चर्यकरोरुलिङ्गरूपं । इन्द्रस्य । परमैश्वर्ययुक्त कुवेरस्य । प्रियं । मित्रं । यद्वा । इन्द्रस्य । परमैश्वर्यरूपलक्ष्मीयुक्तस्यविष्णोः । प्रियं । भर्तारं । प्रियनाथशब्दानां भर्तृवाचकत्वेन गौरीप्रियः । रमानाथ इत्यादिषु वहुधादृश्यते ॥ शङ्करःशूलपाणिश्च खट्वाङ्गीविष्णुवल्लभ इति शिवसहस्रनामावल्यां विष्णुवल्लभत्वं तस्य सुप्रसिद्धं । कामितुंयोग्यं काम्यं । चतुर्वर्गफलप्रदातृत्वेन । सर्वकाम्यत्वं तस्यैवसिद्धं । सनिं । भजनीयमुपासनीयं वा । वनसनसंभक्तावितिधातुः ॥ मेधामयं । ज्ञानप्राचुर्यं । सर्वज्ञ इत्यर्थः । "यःसर्वज्ञः सर्ववि-दितिश्रुतेः ॥ असिषं । प्राप्तवानस्मीति शिवज्ञानिनः स्वमाहात्म्य ज्ञापकमन्त्रोऽयम् ॥ इति च अष्टादशवाक्यभाष्यं समाप्तम् ॥

मूलम्—उद्दीप्यस्वजातवेदोपघ्नन् निरृतिंमम ।
पशूँश्च।मह्यमावह । जीवनं च दिशोदश २९

भाष्यम्—एवंजगज्जन्मादिकारणनिरवयवपरिपूर्णशिवतत्व माहात्म्यमुपपाद्य । परशिवसम्बन्धघोरतनुप्रार्थनामुपदिशति उद्दीप्य इति ॥ जातानि चेतनाचेतनानि । तत्कर्माणि च ।

वेत्तीति । जातवेदाः । तस्यसम्बुद्धिः । हेजातवेदः । सर्वज्ञपरशिवेत्यर्थः । अग्निस्वरूपपरशिव इति वा । रुद्रोवाएषयदग्निस्तस्यैते तनुवौ घोरान्याशिवान्येतिश्रुत्यन्तरे ॥ तथाश्रूयमाणत्वादुभयथापिनविरोधः । मम । मे । निम्रृग्रृतिं । पापं । अपघ्नन्नेव । नाशयन्नेव । उद्दीप्यस्व । प्रकाशयस्व । मह्यं । पशूँश्च । भवदाराधनोपयुक्तगवः । यज्ञाङ्गभूतपशूँश्च । आवह । आनय । दिशोदश । दशदिक्षु । जीवनं च । जीवनसाधकमन्नं । चकाराद्वस्त्रादिकंचेत्यर्थः । आनय । आसमन्ताद्दापयेत्यर्थः । दिशोदश । इत्यत्रविशेष्यपूर्वपदकर्मधारयः । प्रथमाविभक्तेः सप्तमीत्वेन विपरिणामः ॥ १९ ॥

मूलम्—मानोहिँसीर्जात वेदो गामश्वं पुरुषं जगत् । अबिभ्रदग्न आगहि । श्रिया मामपरि पातय ॥ २० ॥

भाष्यम्--मानोहिँसिरिति ॥ हे जातवेदः । हे सर्वज्ञ । परशिव । नः । अस्माकं । त्वदाराधनार्थं त्वद्भक्ताराधनार्थं च । गां । गावः । अश्वं । अश्वान् । पुरुषं । पुत्रान् । भटान् भूमिं च । मानोहिंसीः । आवधीः । दापयेत्यर्थः । जात्यैकवचनं सर्वत्र । हे अग्ने । अग्निस्वरूप हेपरशिव । अबिभ्रत् । सर्वभयंकरघोररूपमधारयन् । आगहि । आयाहि । शान्तरूपतया मम साक्षात्कारो भवेदित्यर्थः । तादृशो भूत्वा किं कर्तव्यमित्यन्वाह । श्रिया । श्रद्धा भक्तिरूप सम्पदा । मां अपरितापय । परिपातनंमा कुरु । संयोजयेत्यर्थः । अग्नेरपि पर-शिवात्मकत्वेन दीपादि समर्पणकाले विनियोग दर्शनेऽपि । नास्माकं क्षतिः ॥ ॥ २० ॥ इति प्रथमानुवाके विंशति वाक्य भाष्यं समाप्तम् ॥

एवं घोरतनुविशिष्टपरमेश्वरप्रार्थनामुक्त्वाऽघोरतनुविशिष्ट परमेश्वरप्रार्थनं । तद्भक्तपुत्रकलत्रप्रार्थनं चाह ॥

मूलम्—तत्पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि ॥ तन्नोरुद्रः प्रचोदयात् ॥ २१ ॥

भाष्यम्—पुरुषस्येति ॥ पुरि दहराकाशे शेत इति । पूर्णाद्वा । पुरुषः । 'शम्भुराकाशमध्ये शिव एको ध्येयश्शिवंकरः सर्वमन्यत्परिज्येति, । अथर्वणशिखायां । पुरुषोवैरुद्रस्तन्महो-नम इतिश्रुत्यन्तरे च दहरोपास्यत्व-पुरुषशब्दवाच्यत्वे शिवस्यैव प्रतिपादनादत्रपुरुषशब्दवाच्यः शिव एव । महादेवस्य । ब्रह्मविष्णुकालरुद्राधिकस्य । सहस्राक्षस्य । अनन्ताक्षस्य । पुरुषस्य । पुरुषशब्दवाच्यशिवं । कर्मणिषष्ठीवा । विभक्तिविपरिणामं वा कार्यं । विद्म । उपास्महे । धीमहि । ध्यायेम । एतेन । अन्तरुपासनं वहिरुपासनं च प्रोक्तं भवति । अधिकस्मादुच्यते महादेवो यस्मादुच्चार्यमाणएव । सर्वान्भावान्परित्यज्य आत्मज्ञानयोगैश्वर्ये महति मीयते तस्मादुच्यते महादेव इत्यथर्वशिरसि । महादेवपदस्य शिवसर्वाधिकत्वरूपेण निरुक्तिरुपदेशात्पुरुषस्य । पुरुषस्वरूपस्य । सहस्राक्षस्य । महादेवस्य । महादेवं । विद्म । उपास्महे । धीमहि । ध्यायेम इतिवाऽन्वयः कार्यः ॥ नः । तत् । ध्यानं । रुद्रः । प्रचोदयात् । अविघ्नतया संपूर्तिं कुर्यादित्यर्थः ॥ अत्र महादेवस्य ब्रह्मविष्णवादिसर्व-देवतातिशयत्वद्योतनार्थं प्रथमं तन्नमस्कारमुक्त्वा पुनर्मन्त्रान्तरेणाह ॥ लोकेराज्ञोतथादृश्यते ॥ २१ ॥

मूलम्—तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ २२ ॥

भाष्यम्—तत्पुरुषायेति ॥ सचासौ पुरुषः । तत्पुरुषः । दहराकाशमध्योपास्यमानपरशिवः । तस्मै तत्पुरुषाय । महादेवाय । महादेवमितिविभक्तिविपरिणामः । सर्वत्र कार्यः । विद्महे । उपास्महे । धीमहि । ध्यायेम । शिष्टं स्पष्टं पूर्ववत् ॥ २२ ॥ इतिरुद्रगायत्रीवाक्यं ॥ एवं शिवस्य । अनन्यदेवता साम्यमुक्त्वा । तत्पुत्रादि प्रार्थनामाह ॥

मूलम्—तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि ।
तन्नो दन्तिः प्रचोदयात् ॥ २३ ॥

भाष्यम्—वक्रतुण्डायेति ॥ वक्रं । कुटिलं । तुण्डं । नासिकं । यस्यसः तथोक्तः । तत्पुरुषाय । तत्तुल्यपुरुषाय । तद्भक्तविषये । एवमेवयोज्यं । यथालोके राजात्वमसीत्यत्रमन्त्रिणो राजतुल्यत्वं स्वीक्रियते तद्वदिहापि । योज्यं । वक्रतुण्डाय । वक्रनाशिकं विघ्नेश्वरं विद्महे । उपास्महे । धीमहि । ध्यायेम । अन्तरुपास्महेत्यर्थः ॥ २३ ॥

मूलम्—तत्पुरुषाय विद्महे चक्रतुण्डाय धीमहि ।
तन्नः नन्दिः प्रचोदयात् ॥ २४ ॥

भाष्यम्—चक्रतुण्डायेति ॥ चक्रवत् तुण्डं वदनंयस्यासौ चक्रतुण्डः । तस्मै तथोक्ताय शिवतुल्यनन्दीश्वरं । विद्महे । धीमहि ॥ २४ ॥

मूलम्—तत्पुरुषाय विद्महे महासेनाय धीमहि ।
तन्नः षण्मुखः प्रचोदयात् ॥ २५ ॥

भाष्यम्—तत्पुरुषायेति ॥ शिवतुल्यमहासेनं । कुमारमित्यर्थः । शिष्टं स्पष्टम् ॥ तत्पुरुषायेति ॥ तच्छब्दस्य पूर्वपरामर्श-

त्वात् । तत्पुरुषाय । कुमारकल्पाय । (सुवर्णपक्षाय । सुवर्णवत्पीतरूपपक्षायेत्यर्थः) शिष्टंस्पष्टम् ॥ २५ ॥

मूलम्—वेदात्मकाय विद्महे हिरण्यगर्भाय धीमहि
तन्नो ब्रह्मा प्रचोदयात् ॥ २६ ॥

भाष्यम्–वेदात्मनायेति ॥ वेदाः । आत्मा । स्वरूपं यस्यासौ । तथोक्तः । यद्वा । वेदाः आत्मनि बुद्धौ यस्यासौ । तथोक्तः । उभयथापि सर्ववेदपारङ्गत इतिभावः । हिरण्यंगर्भेयस्यासौतथोक्तः हिरण्यरूपगर्भोयस्यासावितिवा । हिरण्यगर्भः । तस्मै ॥ अन्यत्स्पष्टम् ॥ २६ ॥

मूलम्—कात्यायनाय विद्महे कन्य कुमारि धीमहि ।
तन्नो दुर्गिः प्रचोदयात् ॥ २७ ॥

भाष्यम्–कात्यायनायेति ॥ गोत्रतः कात्यायन्यै । उत । कन दीप्ताविति धातुः । दीप्तिमत्यै इति वा । कुमारि । कुमार्यै । अत्र लिङ्गव्यत्ययवचनव्यत्ययौ छान्दसौ । शिष्टं स्पष्टम् ॥ दुर्गागायत्री समाख्येयं ऋक् ॥ २७ ॥

मूलम्—नारायणाय विद्महे वासुदेवाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् ॥ २८ ॥

भाष्यम्–नारायणायेति ॥ स्पष्टार्थः नरायणस्य शिवपत्नित्वेनात्र नारायणगायत्र्यां पुरुषशब्देनोपदिष्टः । कात्यायनी शक्त्यंशत्वेन अव्यवहिततत्साहचर्यमुक्तं । रुद्रगायत्र्यां । महादेवशब्दः । पुरुषशब्दश्च स्पष्टमुपदिष्टत्वाच्छिवस्य विष्णुवल्लभत्वं सूच्यते ॥ तथास्कान्दे शंकरसंहितायां भगवता व्यासेन स्पष्टमुपदिष्टं । यथा । शिवस्य शक्तिर्विनियोग काले चतुर्विधा

भूच्छिवसत्प्रसादात् । भोगे भवानी पुरुषेषु विष्णुः । क्रोधे च काली समरेचदुर्गेति ॥ प्रकृतिस्त्वं पुमान् रुद्रस्त्वयि तद्वीर्यमाहितं । त्वन्नाभिपङ्कजाज्जातः । पञ्चवक्त्रः पितामहः इति शैवपुराणे तथाष्टभैरवस्तुतौ ॥ शिवकेशवसम्भूतं कलये शास्त भैरवमिति शिवरहस्यखण्डादिषु स्पष्टमुपदिष्टत्वान्नारायणस्य शिवपत्नीत्वे । न शंकावकाशः ॥ २८ ॥

मूलम्—सहस्रपरमादेवी शतमूला शताङ्कुरा ।
सर्वं हरतुमे पापं दूर्वा दुस्स्वप्ननाशिनी ॥२९॥

भाष्यम्—शिवयोगाभ्यासकानामिन्द्रियजयसाधनत्वात्स्नानकाले शिरसि धारणीयत्वाच्च प्रथमं दूर्वास्तोत्रमारभ्यते ॥ सहस्रपरमेति ॥ सहस्रपरमा । सहस्रपर्विका । देवी । दीप्यमाना । शतमूला शताङ्कुरा । दूर्वा । शतपर्विका । मे । मम । दुःस्वप्ननाशिनी । दुःस्वप्नान्नाशयतीति तथोक्ता । भूत्वा । सर्वं । सर्वं । पापं । दुष्कृतं । हरतु । नाशयत्वित्यर्थः ॥ २९ ॥

मूलम्—अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरा । शिरसा धारिता देवि रक्षस्व मांपदे
पदे उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥

भाष्यम्—अश्वक्रान्तेति ॥ स्नानादौ मृद्ग्रहणमन्त्रमिदं ॥ अश्वक्रान्ते । अश्वपदमुपलक्षणं । अश्वादिसर्वजन्तुव्याप्ते । रथक्रान्ते । इदमुपलक्षणं । रथादिसर्वाचेतनव्याप्ते । सर्वाधिष्ठानभूतेत्यर्थः । विष्णुक्रान्ते । विष्ण्वादिसर्वदेवताक्रान्ते । वसु धनं धारयतीति वसुंधरा । वसुंधरामितिविभक्तिविपरिणामः । त्वां । शिरसा । मूर्ध्ना । धारयिष्यामि । मां । पदे पदे । सर्वदा । रक्षस्व । पाहि । उद्धृतासि । कृष्णेन । कृष्णरूपेण ।

वराहेण । तदवतारभूतविष्णुना शतवाहुना । वहुप्रयत्नेन । उद्धृतासि । ऊर्ध्वं गमितासीत्यर्थः ॥ ३० ॥

मूलम्—भूमिर्धेनुर्धरिणी लोकधारिणी । मृत्तिके हनमे पापं यन्मयादुष्कृतं कृतम् ॥ त्वया-हतेन पापेन गच्छामि परमां गतिं मृत्तिके देहिमे पुष्टिं त्वयि सर्वं प्रतिष्ठितं । गन्ध-द्वारां धुराधर्षां नित्यपुष्टां करीषिणीं । ईश्वरीँ सर्व भूतानां त्वामिहोपह्वये श्रियम् ॥

भष्यम्—भूमिधेनुरिति ॥ मृद्धारणमन्त्रमिदं । भवत्य-स्मिन्सर्वे पदार्था इति भूमिः । सर्वकामदोगधृत्वाद्धेनुः । निश्चलतया विश्वं धरतीति धरणिः । लोकधारिणी । लोकान् । स्वर्गादीन् जनान् वाधारयतीति लोकधारिणी । सर्वत्र विभक्ति-विपरिणामः कार्यः । हेमृत्तिके । एतादृग्विशेषणविशिष्टमृत्तिके । मेमम । पापं । जन्मान्तरकृतं । मया । दुष्कृतं । इहजन्मनि कृतं पापकर्म च । हन । नाशय । त्वया । हतेन । पापेन । दुष्कृतेन । पापाभावेनेत्यर्थः । परमां । गतिं । महावैभवाश्रय-पुण्यगतिं । महाकैलासप्राप्तिं वा । गच्छामि । प्राप्नुवामि । हेमृत्तिके । त्वयि । सर्वं । पुष्टिसाधनवर्गं प्रतिष्ठितं । स्थितं । यतः । अतोमे पुष्टिं । शरीरवलं । देहि ॥ गन्धद्वारामिति ॥ गन्धो द्वारं यस्याः सा गन्धद्वारा । गन्धलक्षणायद्गन्धवत्त-त्पृथिवीति नियमात्सर्वैर्ज्ञायतेतिभावः । धुराधर्षां । पापैर्दु-राधर्षामित्यर्थः । नित्यपुष्टां । अविनश्वरबलां । करीषाण्यस्यां सन्तीति करीषिणी तां । करीषिणीं । गोमयादियुक्तामित्यर्थः । सर्वभूतानां । ईश्वरीँ । सर्वजीवपोषणधर्मवत्वाच्छ्रेष्ठामि-

त्यर्थः । त्वां । इह । अस्मिन्काले । उपाह्वये । समीपे आह्वयामि । मे श्रियं । सम्पत्तिं । आवह । इतिशेषः ॥ ३० ॥

मूलम्—हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः । यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः । यन्मे मनसा वाचा कर्मणा दुष्कृतं कृतं । तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः ॥ ३१ ॥

भाष्यम्—मृद्धारणगन्धादिलेपनविनियुक्तोऽयं मन्त्रः । अचेतनदूर्वादीनां पापनिरासपूर्वकत्वेन पुरुषार्थप्रदसामर्थ्याभावात्किमर्थमुक्तमितिचेत् । अष्टमूर्तेः शिवस्य भूरप्येकमूर्तित्वात् । दूर्वादीनां भूरूपत्वात् । शरीरस्तुतिनिन्दादिकं शरीरिण एवेति नियमाच्च तत्स्तुत्या शिवएव तुष्ट्वा तत्फलं स एव दास्यत्यतो न विरोधः ॥ हिरण्यशृङ्गमिति ॥ लिङ्गधारणविशिष्टवरुणप्रार्थनामन्त्रोऽयं । हिरण्यं । हिरण्यात्मं लिङ्गं शृङ्गे शिरसि यस्य तथोक्तः । हिरण्यायनमः हिरण्यलिङ्गायनमः नमो हिरण्यबाहवे हिरण्यरूपायेत्यादिषु, शिवस्य हिरण्मयत्वं हिरण्यशब्दवाच्यत्वं स्पष्टमुपदिष्टं । तं । वरुणं । प्रपद्ये । नमस्करोमीत्यर्थः । "शिवभक्तः शिवः साक्षादितिकैंकर्यभावतः भक्तिंकुर्यात्सदाकालं कायेन मनसा गिरेति शिवागमोक्तरीत्या" । शिवभक्तं वरुणं । शिवभावनया वेदपुरुषोऽपि सन्मानितवान् । किमुतान्येषां शिवभक्तसन्मानेति भावः । तीर्थं पादतीर्थं । जलं वा । मे । मम । देवा इति याचितो वेदपुरुष इत्यर्थः ॥ श्लोकः ॥ हिरण्यं लिङ्गमाख्यातं विश्वरूपं महेश्वरं । शृङ्गे शिरसि तल्लिङ्गं धृतं वरुणमव्ययं प्रपद्ये मनसा वाचा शिवभक्तं सनातनं । तीर्थं देहीति वचसा प्रार्थितं वेदपूरुषैः । इति

भगवता बादरायणेन शैवपुराणे एतन्मन्त्रमुपबृंहितं । अत्रन शंकावकाशः । श्रीकरभाष्ये सर्वत्र प्रसिद्धोपदेशाधिकरणे सर्वदेवतानां लिङ्गधारणविधायकपवमानस्सुवर्जन भद्रं कर्णेभिरित्यादि श्रुतिभिस्तदुपबृंहणैः सह बहुधा राद्धान्तितं । अत्र भृगुवल्ल्यां किंचिदुक्तं मया । अतोऽत्र विशेषतो न लिखितं । इन्द्रादिसर्वदेवानां लिङ्गधारणमस्तीतिभावः । यन्मयेतिमथा असाधूनां । असाधुभ्यः पापेभ्यः । दुष्टात्मभ्यः विभक्तिव्यत्ययः छान्दसः । प्रतिग्रहः । गृहीतं यत् पदार्थं भुक्तं मे मम । कर्मणा मनसा वाचा त्रिकरणेभ्यः यद्दुष्कृतं कृतं नः तत्सर्वं इन्दतीति इन्द्रः परमैश्वर्ययुक्तः । इति परमैश्वर्ये वृणोति वरानमूल्लोक इति वरुणः वृञ्वरणे बृहतां देवानां वेदमन्त्राणां वा पतिः बृहस्पतिः । सुवति सुप्तं प्रेरयतीतिसविता पू प्रेरणे एते पुनः पुनः सर्वदा पुनन्तु पावनं कुर्युरित्यर्थः ॥ ३१ ॥

मूलम्—सुमित्रा न आप ओषधयस्सन्तु दुर्मित्रा
स्तस्मै भूयासुर्योऽस्मान्द्वेष्टि । यं च वयं
द्विष्मः ॥ ३२ ॥

भाष्यम्—सुमित्रा इति ॥ नः । अस्माकं । आपः । जलानि । ओषधयः । फलपाकान्ताः वृक्षाः । सुमित्राः सन्तु मित्रतमाः सन्तु । किं च । यः पुरुषः । अस्मान द्वेष्टि । यं चवयं द्विष्मः । तस्मै पुरुषाय । दुर्मित्राः । शत्रुतरारयो भूयासुः । भवेयुः ॥ तीर्थाभिमन्त्रणमन्त्रोऽयं ॥ ३२ ॥

मूलम्—नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय
नमो वारुण्यै नमोऽद्भ्यः ॥ ३३ ॥

भाष्यम्--नमोऽग्नय इति ॥ अप्सुमते जलान्तर्वर्तिने अग्नये । वडवानलायनमः । इन्द्रायनमः । वरुणायनमः । वारुण्यैनमः । अद्भ्यः । जलान्तर्वर्तिदेवतानमस्कारमन्त्रोयं । वरुणस्यपत्नी वारुणी । अगति । कुटिलं ऊर्ध्वं वा गच्छत्यग्निः ॥ इति ॥

मूलम्--यदपां क्रूरं । यदमेध्यं यदशान्तं तदवगच्छतात् । अत्याशनादतीपानाद्यच्चउग्रात्-प्रतिग्रहात् तन्मे वरुणो राजा पाणिना ह्यवमर्शतु ॥ ३४ ॥

भाष्यम्--यदपामिति ॥ अपां जलानां । क्रूरं । असहिष्णत्वं । अमेध्यं । अशुचित्वं । अशान्तं । अतिशैत्यमित्यमित्यर्थः । यदस्ति तत् । अवगच्छतात् । वरुणप्रसादेन तादृशदोषशान्तिर्भूयादित्यर्थः । अत्याशनात् । अमिताहारात् । अतीपानात् अपरिमितजलपानात् । जात्यन्तरान्नजलग्रहणाद्वा । उग्रात् । दोषविशिष्टात् । प्रतिग्रहात् । गृहीतद्रव्यात् । यदनिष्टं जायते । मे । मम । तत् । दोषमनिष्टं वा राजा जलदानेन राजवत्प्रजापरिपालको वरुणः । पाणिना । हस्तेन । अवमर्शतु । मार्जयतु । नाशयतीत्यर्थः ॥ स्नानकाले जलगतदोषनिरासार्थोऽयं मन्त्रः ॥ ३४ ॥

मूलम्--सोहमपापो विरजो निर्मुक्तो मुक्तकिल्मिषः । नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्म सलोकताम् ॥

भाष्यम्–सोहमपाप इति ॥ विरजसा निर्मुक्तः । विरजो निर्मुक्त रजोगुणविशिष्टमनसानिर्मुक्त इत्यर्थः । मुक्तकिल्बिषानि यस्य सोहं मुक्तकिल्बिषः । रजोगुणत्यागेन । किल्बिषत्यागः सम्भवतीति भावः । यतोहं उभयधर्मविशिष्टः । अतः । अपापः । शुद्धान्तःकरणवानित्यर्थः । तादृशोहं नाकस्य । स्वर्गस्य । पृष्ठं । ऊर्ध्वभागं । आरुह्य । अतिक्रम्येत्यर्थः । सचासौ लोकश्च सलोकः । तस्य भावः । सलोकता ब्रह्मणः सलोकता ब्रह्मलोकसलोकता । तां । तथोक्तां । ब्रह्मसालोक्यमित्यर्थः । ब्रह्मशब्दस्य परशिवपर्याय-वाचकत्वाच्छिवसालोक्यमिति यावत् । गच्छेत् । गच्छेयं । पुरुषव्यत्ययः छान्दसः । इमौ मन्त्रौ स्नानकाले जलसेचन-विनियुक्तौ ।

मूलम्––इमं मे गंगे यमुने सरस्वति शुतुद्रिस्तो-
मँ सचतापरुष्णिया । असिक्न्याम
रुद्वृधे वितस्तयार्जिकिये शृणुह्यनुषो-
मया ॥ ३६ ॥

भाष्यम्–इमं मे इति ॥ मे मम । इमं जलं प्रति । हे गंगे । हे यमुने । हे सरस्वति । हे शुतुद्रि वरुष्ण्या नद्यासह । हेमरु-द्वृधे । असिक्निया सह । हे अर्जिकीये । वितस्तया । सुषोमया च सह । सचता । असचत । इति भवति । आगच्छत । शृणुह्य-नुषोमयेत्यत्र आङ् । सचेत्यत्र अन्वयः । एवं । यूयमागत्य । स्तोमँ । स्तोत्रं शृणुहि । शृणुतेत्यर्थः ॥ ३६ ॥

मूलम्—ऋतं च सत्यं चाभिद्धात्तपसोऽध्यजायत
ततो रात्रिरजायत । ततः समुद्रो अर्णवः ।
समुद्रादर्णवादधि संवत्सरोऽजायत ॥३७॥

भाष्यम्—अन्तर्जले निमग्नेन जप्यमघमर्षणसूक्तमाह ऋतं चेत्यादिना ॥ अभिद्धात् । उत्पन्नात् । तपसः । ईश्वरसंकल्पात् ऋतं । ऋगतौ । ऋच्छति गच्छति विकारमिति । ऋतमचेतनं । प्रधानमुच्यते । सत्यं । स्वरूपान्यथाभावशून्यचेतनवर्गः । सृष्ट्युन्मुखकाले परमेश्वरचिकीर्षावशात्प्रथमं प्रकृतिपुरुषावुत्पन्नाविति भावः । अध्यजायत । उत्पन्नं ॥ तत इति । ततः । प्रधानस्य अज्ञानहेतुत्वाद्रात्रिशब्दोपलक्षितमहदादिवर्गः सम्भूत इत्यर्थः ॥ ततः । अनन्तरं । समुद्रः । वेलापरिवीष्टितः । अर्णवः । महोदधिः समजायत । एतेन जलराशिवाच्यभूतवर्गस्समजायतेतिसूच्यते । अर्णवशब्देन भूतविकार ब्रह्माण्डं च सूच्यते । समुद्रादिति । ततऊर्ध्वं । समुद्रादर्णवात् । पंचभूतानां तद्विकारब्रह्माण्डानां च । अधिसंवत्सरः । अधिपतिश्चतुर्मुखः । अजायत । बभूव । प्रजापतिः संवत्सरोमहान् इति श्रुत्यन्तरे संवत्सरशब्दवाच्यत्वं चतुर्मुखस्य ॥ ३७ ॥

मूलम्—अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ।
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्
दिवं च पृथिवीं चान्तरिक्षमथोसुवः ॥

भाष्यम्—अहोरात्राणीति ॥ मिषतः । लब्धसत्ताकस्य । विश्वस्य जगतः । वशी । नियन्ता । धाता । चतुर्मुखः । अहोरात्राणि । विदधत् सन् सृजन् सन् । हेतौशतृप्रत्ययः । तद्विधानाय । यथापूर्वं । पूर्वकल्पवत् । सूर्याचन्द्रमसौ । दिवं च पृथिवीं चान्तरिक्षं च अधः । अनन्तरं । सुवः । सुवश्शब्दोपलक्षितचतुर्दशलोकांश्च । अकल्पयत् । कल्पितवान् ॥ ३८ ॥

मूलम्—यत्पृथिव्यां रजस्स्व मान्तरिक्षे विरोदसी ।
इमाँ स्तदापो वरुणः पुनात्वघमर्षणः ॥३९॥

भाष्यम्—यत्पृथिव्यामिति ॥ पृथिव्यां भूमौ । अन्तरिक्षे रोदसी । रोदस्योरित्यर्थः। सप्तमी द्विवचनस्य सुपां सुलुगिति लुक् । इह लोके । परलोके च । यत्स्वं । आत्मीयं । इमाँ इमानि पापानि । वर्तन्ते । तत् । पापं । इमाँमिति वृत्यभिप्रायेण बहुवचनं ॥ आपः । जलानि । अघमर्षणः । सर्वजनपापापनोदकः । वरुणः । जलाधिष्ठानदेवताच । पुनातु । पापापनोदनं कुर्युरित्यर्थः ॥ ३९ ॥

मूलम्—एष भूतस्य भव्ये भुवनस्य गोप्ता ।
एष पुण्यकृताँल्लोकानेष मृत्योर्हिरण्मयम् ॥
द्यावा पृथिवी हिरण्मयँ संश्रितं ।
सुवः । सुनस्सुवसँशिशाधि ॥ ४० ॥

भाष्यम्—एष भूतस्येति ॥ एषः । वरुणः भूतस्य । भूतकालीनस्य । भविष्यतश्च । भविष्यत्कालिकस्य । भुवनस्य । जगतः । गोप्ता । जलाधिष्ठातृतया रक्षकः । चेतनाचेतनप्रपञ्चस्य जलं दत्वारक्षतीत्यर्थः ॥ भवेत्यत्र भव्यस्य। इति विभक्तिविपरिणामः । पुण्यकृताँल्लोकान् । पुण्यजनान् । प्रति । एषः । वरुणः । रक्षक इत्यर्थः । एषः । वरुणः । मृत्योः । हिरण्मयं । तत्स्वरूपजीवं । रक्षतीत्यर्थः । द्यावापृथिव्योः । संश्रितं । स्थितं हिरण्मयँ । हिरण्मयस्वरूपं । सुवः । स्वर्गलोकं च । गोप्ता । भूलोकेऽपि । भूमयाः स्वर्गलोकाः सन्तीति लोके प्रसिद्धं । मेरुमन्दरादय इति भावः । सन इति हे परमेश्वर ।

सत्वं । नः । अस्माकं सुवस्सँ । सुवः स्वर्गलोकः कैलासं वा । सँ । सम्यक् । शिशाधि । बहुलं छन्दसीतिश्लुः । शाधि । शासनं । ज्ञापनं । प्रदर्शनमितियावत् । दर्शयेत्यर्थः । शिवभक्तः शिवो भवेदिति स्मृत्यागमरीत्या भक्तमाहात्म्यज्ञापन-मन्त्रमिदं ॥ ४० ॥

मूलम्---आर्द्रंज्वलति ज्योतिरहमस्मि ।
योहमस्मि ब्रह्माहमस्मि ॥
अहमेवाहं मां जुहोमि स्वाहा ॥ ४१ ॥

भाष्यम्—आर्द्रंज्वलतीति ॥ आर्द्रं ज्वलति यदापो ज्योतिरूपेण हृदयपुण्डरीके ज्वलति । तज्ज्योतिरह-मस्मि ॥ ज्योतिर्ज्वलति । ब्रह्माण्डे सर्वत्र साधनान्तर-निरपेक्षतया स्वयं प्रकाशमानं यज्ज्योतिःस्वरूपब्रह्मप्रकाश ते । तद्ब्रह्माहमस्मीत्यर्थः । योहमस्मियः । शरीरेन्द्रियमनः प्राणबुद्धिविलक्षणस्वरूपं । अहमस्मि । सोहं । ब्रह्मास्मि । यथानद्यः स्यन्दमानाः समुद्रेति ब्रह्मवेद ब्रह्मैवभवति ॥ इत्यादि बहुश्रुतिसिद्धस्वाभाविकजीवत्वनिवृत्तिपूर्वकपुनरावृ-त्तिरहितशिवत्वं प्राप्तवानस्मीत्यर्थः । अहं ॥ शिवभक्तिध्यान योगपूर्वकोपासकोहं । अहमेव । जीवसाक्षितया भासमान शिवएव । अस्मि ॥ मां । ममत्वाभिमानं । जुहोमि । अग्नि-स्वरूपेत्वयि । होष्यामि । नाशयामीत्यर्थः । एतेन जीवब्रह्म-णोर्द्वैताद्वैतात्मकमतमेव मुमुक्षूणां ग्राह्यमिति वेदपुरुषेण राद्धान्तितं भवति ॥ ब्रह्मविदः स्वानुभूतिप्रदर्शकमन्त्र-मिदम् ॥ ४१ ॥

मूलम्——अकार्यकार्यवकीर्णस्तेनो भ्रूणहागुरुतल्पगः।
वरुणोपापमघमर्षणस्तस्मात्पापात्प्रमुच्यते ४२

भाष्यम्—अकार्यकार्यवकीर्णेति ॥ अकार्यकारि । अगम्यागमनं । अभक्ष्यभक्षणं । अवकीर्णं । अवकीर्णमित्यर्थः। साहचार्यादत्रधर्ममात्रबोधकं । व्रतभ्रष्टत्वं । स्तेनः । स्वर्णस्तेयं । भ्रूणहा । भ्रूणहत्या । गुरुतल्पगः । पापं । एतादृक्पापं । पापसमुदायमित्यर्थद्योतनार्थमेकवचनं । अघं पापं । अर्षति । नाशयतीति । अघमर्षणः । यतः । वरुणः । अघमर्षणः । तस्मात् । तद्धेतोः । पापात् । प्रमुच्यते जन इतिशेषः । एतदनुवाकमुच्चरन् यस्तु स्नानं करोति तस्य सर्वपापानि वरुणो नाशयतीति भावः ॥ ४२ ॥

मूलम्——रजोभूमिस्त्वमां रोदयस्व प्रवदन्ति धीराः ।
पुनन्तुऋषयः । पुनन्तु वसवः पुनातु वरुणः
पुनात्वघमर्षणः ॥ ४३ ॥

भाष्यम्—रजोभूमिरिति ॥ रजोभूमिस्तु । कर्मभूमिरियन्तु । अमां । अघमर्षणस्नातुः । मत्तोन्यं । रोदयस्व । रोदयतु । एवंधीराः । विद्वांसः । प्रवदन्ति । ऋषयः । दूर्वासागस्त्योपमन्युदधीचिवामदेवादयः । मां पुनन्तु । पवित्रं कुर्वन्तु । वसवः । वसुगणाः । पुनन्तु । अघमर्षणः वरुणः । पुनातु । रक्षतु आदराद्विरुक्तिः ॥ ४३ ॥

मूलम्——आक्रान्त्समुद्रः प्रथमे विधर्मन् जनयन्प्रजा
भुवनस्य राजा । वृषा पवित्रे अधिसानो

अव्ये वृहत्सोमो वावृधेनुवान इन्दुः ॥४४॥

भाष्यम्—आक्रान्समुद्र इति ॥ सम्यग्द्भवति उत्पद्यते जगदस्मादितिसमुद्रः । जगत्कारणमित्यर्थः । प्रजाः । जनयन् । उत्पादयन् । भुवनस्य राजा । चराचरनियन्ता । ईश्वरः सर्वभूतानामिति श्रुतेः । आक्रान् । आक्रान्तवान् । व्यापक इत्यर्थः । क्रमेर्विप्रत्यये । मोनो धातोरितिनत्वेरूपं । वृषा । ब्रह्मविष्ण्वादिभक्तानां । कामानि वर्षतीति वृषा । वृष् सेचने इति धातुः । शिवगीताभारतादिषु रामकृष्णादीनां वरप्रदानत्वं वहुधा प्रपञ्चितं । ग्रन्थविस्तरभयान्नलिखितं । सुवानः । पुरुषार्थप्रदाता । इन्दुः । परमैश्वर्यशाली । वृहत् । ब्रह्मविष्ण्वादिभ्योऽधिकः । सोमः । उमया सहितः । सोमः । पराशक्तियुक्तः शिवः त्रिधर्मन् । प्राकृतधर्मशून्ये । अधिसानो । सानुवदुन्नतस्थाने । ब्रह्मविष्णुलोकोर्ध्वभागस्थितेत्यर्थः ॥ आधारभ्रूमध्यप्रदेशादूर्ध्वदेशस्थिते वेतिवास्यात् । अव्यये । नाशरहिते । पवित्रे । परिशुद्धस्वभावमहाकैलासे । सहस्रारेवा । उतलिङ्गेवा । पवित्रीकरणात्पुंसां पवित्रमिति कथ्यतेतिस्मृतेः । वावृधे । असदृशप्रकाशतया वर्धतेत्यर्थः । प्रकाशतेतिभावः । इदं शिवानुसंधानरहस्योपदेशमन्त्रम् ॥ ४४ ॥

मूलम्—जातवेदसे सुनवामसोममराति यतो निज
हाति वेदः ॥ सनः पर्षदतिदुर्गाणि विश्वा-
नावेव सिन्धुं दुरितात्यग्निः ॥ ४५ ॥

भाष्यम्—जातवेदसे इति ॥ पापक्षयार्थं परमेश्वर घोरतनुप्रार्थनामन्त्रमिदं । जाताः । वेदाः यस्मात्सः जातवेदाः । "यस्य निश्वसितो वेदा इति श्रुतेः" । जाते जाते विद्यत इति जातवेदाः । "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।

प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधमितिस्मृतेः । ” जाठराग्निरूपेण वर्तत इत्यर्थः । विद्सत्तायामिति धातुः । वेदो हिरण्यमस्माज्जात इति वा । हिरण्यरेतो दुर्धर्षइति इति शिवसहस्रनामावल्यां । जातं शुभाशुभं कर्म वेत्तीति वा तथोक्तः । सर्वकर्मणामग्निमूलकत्वेन कर्तव्यविधानात् । जातवेदसे । अग्नये । सोमं । पूजोपकरणं । हविः ॥ सुनवाम । होष्यामीत्यर्थः । पूजयामीतिभावः । अराति यतः । यतः । यस्मात्कारणात् । वेदः । धनं । अरात् । शत्रुः । परमार्थविघ्नकारित्वात्सतः । निजहाति । त्यजामीत्यर्थः । पुरुषव्यत्ययश्छान्दसः । सोमयागादिकव्रतपूर्वकत्वेन । भवङ्गस्काराधनपूर्वकत्वेन वा । सम्पादितं धनं विनियोगं करोमि । न त्वन्यथा करोमीति यावत् । सः पूर्वोक्तसर्वसाक्षिस्वरूपोग्निः । घोरतनुविशिष्टशिवः । पर्षत् । मम पालकः सन् । नः अतिदुर्गाणि । अतीतदुर्गसादृश्यानि । विश्वा । विश्वानि । दुरितानि । दुरितानीत्यर्थः वर्णव्यत्ययश्छान्दसः । सिन्धुं । समुद्रं । नावेव । उडुपमिव । तारयत्वितिशेषः । एतेन अर्जितसर्वधनं भगवदाराधनपूर्वकत्वेन यस्तु विनियोगं करोति तस्यासदृशपापानि । परमेश्वरो नाशं कृत्वा चरमपुरुषार्थं दास्यतीतियावत् ॥ ४५ ॥

मूलम्--तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं
कर्मफलेषुजुष्टां। दुर्गां देवीं शरणमहं प्रपद्ये।
सुतरसि सुतरसेनमः ॥ ४६ ॥

भाष्यम्—तामग्निवर्णामिति दुःखनाशाय । दुर्गाप्रार्थनामन्त्रोयं । अग्निवर्णां । वह्निस्वरूपां । तपसा । शिवज्ञानेन ज्वलंतीं । प्रकाशमानां । वैरोचनीं ॥ इन्द्रनीलकान्तिमतीं ।

कर्मफलेषु । कर्मोपासनेषु । जुष्टां । उपास्यमानां । तां । शिव भिन्नाभिन्नशक्तिरूपां । दुर्गां देवीं ॥ दुर्गानामकदेवीं । अहं । शरणं प्रपद्ये । रक्षकत्वेन स्वीकरोमीति भावः । एते मन्त्रे शिवशक्तिसामरस्यबोधक इति ध्येयं सुतरसि । अन्तर्भावितण्यर्थोयं शब्दः । सम्यक् तारयसि । तरसे । ते बलाय नम इत्यर्थः ॥ ४६ ॥

मूलम्——अग्नेत्वं पारयानव्यो अस्मान्स्वास्तिभिरति
दुर्गाणि विश्वा ॥ पूश्चपृथिवी बहुला न
उर्वी भवा तोकायतनयायशंयोः ॥ ४७ ॥

भाष्यम्—अग्नेत्वमिति ॥ अग्न्युपस्थानमन्त्रमिदं । हे अग्ने । नव्यः । नवएवनव्यः । युवेत्यर्थः । त्वं । स्वस्तिभिः शोभनैस्स्तवसंकल्पैः । अतिदुर्गाणि । अतिक्रमितदुर्गसादृश्यानि विश्वा । विश्वानि । पापानीतिशेषः । अस्मान् । नः । पारया । पारय । तारयेत्यर्थः । दीर्घश्छान्दसः । पापेभ्यो मामुत्तारयेति भावः । पूश्च । पुरी । बहुला धनधान्यसमृद्धा । पृथ्वी । भूमिः । उर्वी । पत्तनेतरारण्यभूमिश्च । सस्यपशूनामुपयोगभूतेत्यर्थः । नः अस्माकं । देहीतिशेषः । तोकाय । अपत्याय । तनयाय । तत्सन्तानायच । शंयोः । शं सुखंयौति । मिश्रयतीति शंयोः । विच्प्रत्ययान्तः । ओकारान्तशब्दः ॥ सुख प्रापकइत्यर्थः । भवा । भव । दीर्घश्छान्दसः ॥ ४७ ॥

मूलम्—विश्वानिनो दुर्गहा जातवेदःसिन्धुं न नावा
दुरितादिपर्षि अग्ने अत्रिवन्मनसा गृणानो-
स्माकं भूत्वावितातनूनाम् ॥ ४८ ॥

भाष्यम्—विश्वानिन इति ॥ हे जातवेदः । दुर्गाणि । तत्सदृशदुरितानि हन्तीति दुर्गहा । दुर्गाणि । शैलादि दुर्गमस्थानानि । दहन्तीतिवा । दुर्गहा । तादृशस्त्वं । सिन्धुं । ननावा । नशब्द इवार्थे । नावेव । विश्वानि । सर्वदुरितानि । अतिपर्षि । तारयित्वा पालय । पापनाशंकृत्वा रक्षेत्यर्थः । पृ पालनरक्षणयोरितिवाधातुः । हे अग्ने । अत्रिवत् । अत्रिमहर्षिवत् । मनसा । मानसेन । गृणानः । सर्वं पश्यन् । त्वमस्माकं । तनूनां । शरीराणां । भूत अविता । इति पद विभागः । अविता भूत् । रक्षको भूत् । भवेत्यर्थः । पुरुषव्यत्थयश्छान्दसः ॥ ४८ ॥

मूलम्—पृतनाजितँ सहमानमुग्रमग्निं हुवेम परमात्सधस्तात् । सनः पर्षदति दुर्गाणि विश्वा क्षामद्देवोति दुरितात्यग्निः ॥ ४९ ॥

भाष्यम्—पृतनाजितमिति । पृतनाजितं । परसैन्यजितं । सहमानं । आश्रितापराधसहं । शत्रुविषये । उग्रं । अग्निं । परमात् । सधस्थात् । उत्कृष्टस्थानात् । सहतिष्ठत्यस्मिन्निति सधस्थः । सधमाधास्थयोश्छन्दसीति सहशब्दस्य सधादेशः । हुवेम । आह्वयेमेत्यर्थः। सनः । पर्षदिति । आश्रितापराधं क्षमत इति क्षामत् । तादृशोग्निः। अतिदुर्गाणि । विश्वानि । दुरितानि । अति । अतिवाह्यपर्षत् । नाशंकृत्वा पालकोभवत्वित्यर्थः ।

मूलम्—प्रत्नोषिकमीड्यो अध्वरेषु सनाच्च होतानव्यश्चसत्सि । स्वां चाग्ने तनुवं पिप्रियस्वास्मभ्यं च सौभगमायजस्व ॥५०॥

इति नारायणोपनिषादि प्रथमानुवाकः समाप्तः ॥

भाष्यम्—प्रत्नोषीति ॥ अध्वरेषु । ईड्यः । जेगीयमानः । स्तुत्यइत्यर्थः ॥ आश्रितानां । कं । सुखं । प्रत्नोषि । तनोषि । विस्तारयसीत्यर्थः । सनात् । सनातनः । होता । दाता । नव्यः । वयोविशिष्टश्च । सत्सि । जरामरणशून्यतया मध्यमेवसि । तिष्ठसीतिभावः । स्वां चाग्ने इति हे अग्ने । अस्मद्दत्तेन हविषा । स्वां तनुवं स्वीयतनुं । पिप्रिय । प्रीणाय । वृद्धिगमयेत्यर्थः । अस्मभ्यं च सौभाग्यं । सर्वसम्पत्समृद्धिं । अयजस्व । प्रयच्छ । इति नारायणे प्रथमानुवाकः समाप्तः ॥

श्रीशिवाय पण्डितगुरुचरणारविन्दार्पणमस्तु ॥

## नारायणोपनिषन्नामक कूचिरुद्रे द्वितीयाद्यनुवाकः।

मूलम्—भूरग्नये पृथिव्यै स्वाहा । भुवो वायवेन्तरिक्षाय स्वाहा । सुवरादित्याय दिवे स्वाहा । भूर्भुवस्सुवश्चन्द्रमसे दिग्भ्यः स्वाहा । नमो देवेभ्यो स्वधा पितृभ्यो भूर्भुवः सुवरोम् ॥

इति षष्ठ प्रश्ने द्वितीयोऽनुवाकः ॥

भाष्यम्—भूरग्नय इत्यादि मन्त्राः ब्रह्मोपासनादौ विनियुक्ताः ॥ भूरग्नये ॥ भूरिति व्याहृतिप्रतिपाद्यग्न्यन्तर्वर्तिने शिवाय । पृथिव्यै । पृथिव्यन्तर्वर्तिनेशिवाय च । स्वाहा । ममकारादिसमर्पणमन्त्रं ॥ १ ॥ भुवइति व्याहृति प्रतिपाद्य वाय्वन्तर्वर्तिने । अन्तरिक्षान्तर्वर्तिने । शिवाय । स्वाहा ॥ २ ॥ भूर्भुवस्सुवरिति व्याहृति प्रतिपाद्य चन्द्रान्तर्वर्तिने । दिगन्तर्वर्तिने शिवाय ॥ ३ ॥ देवेभ्यः । तदन्तर्वर्तिने । स्वधापितृभ्यो । तदन्तर्वर्तिने । नमः । भूः । भुवः । सुवर् । सुवइत्यर्थः ।

व्याहृतित्रितयमपि । ॐ । परशिवएवेत्यर्थः । "सर्वोवै रुद्र इति श्रुतेः" । इति द्वितीयानुवाक भाष्यम् ॥

मूलम्—भूरन्नमग्नये पृथिव्यै स्वाहा । भुवोन्नं वायवे-
न्तरिक्षाय स्वाहा । सुवरन्नमादित्याय दिवे
स्वाहा । भूर्भुवस्सुवरन्नमोम् ॥

इति कूचिरुद्रे तृतीयानुवाकः ॥

भाष्यम्–भूरन्नमिति । अत्रभूरिति प्रतिपाद्यस्य परमेश्वरस्य । अनन्तसर्वजीवानामानन्दं दत्वा रक्षतीत्यन्नं । लिङ्गं । "लिङ्गे सुषुप्तिरिति श्रुतेः" । सुषुप्तेः प्राकृतानन्दरूपत्वात् । भूरन्नमग्नये । भूव्याहृतिप्रतिपाद्यग्न्यन्तर्वर्तिलिङ्गरूपायनम इत्यर्थः । एवं सर्वत्र ज्ञेयः । एतदनुवाके सर्वगतस्य परशिवस्य । भक्तोपासनार्थं लिङ्गरूपेण परिच्छिन्नत्वविशिष्टशिवस्य च न कञ्चिद्भेदो विद्यत इतिसूच्यते । यद्वा । अन्नमित्यनेन । शिवस्य भोग्यत्वं वा सूच्यत इति विशेषः ॥ तृतीयोनुवाक भाष्यम् ॥

मूलम्—भूरग्नये च पृथिव्यै च महतेच स्वाहा ।
भुवो वायवे चान्तरिक्षाय महते च स्वाहा ।
सुवरादित्याय दिवे च महते च स्वाहा ।
भूर्भुवस्सुवश्चन्द्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्च ।
महते च स्वाहा नमो देवेभ्यस्स्वधा पितृभ्यो
भूर्भुवः सुवर्महरोम् ॥

इति कुचिरुद्रे चतुर्थानुवाकः ॥

भाष्यम्-चतुर्थानुवाके। परशिवस्य महत्वावच्छिन्त्वमपि सूच्यत इति विशेषः । प्रथमं सर्वान्तर्यामित्वं सामान्यतया प्रतिपाद्य । परिच्छिन्नत्वमपरिच्छिन्नत्वं वा तस्येत्याशङ्कायां । भूरन्नमित्यादिना लिङ्गरूपेण परिच्छिन्नत्वं । भूरग्नय इत्यादिना महत्वं च तस्य समुचितं भवतीत्युपदिष्ट इति भावः ॥

इति चतुर्थानुवाक भाष्यं समाप्तम् ॥ ४ ॥

मूलम्--पाहिनो अग्न एनसे स्वाहा। पाहिनो विश्ववेदसे स्वाहा ॥ यज्ञं पाहि विभावसो स्वाहा। सर्वं पाहि शतक्रतो स्वाहा ॥

इति पञ्चमानुवाकः समाप्तः ।

भाष्यम्-पाहिन इति ॥ एनसे । एनसः । पापादित्यर्थः । अग्ने । हे घोरतनुविशिष्ट शिव । पाहि । रक्ष । स्वाहा । ममत्वादिकं त्वयि । जुहोमीति सूचनार्थं स्वाहापदप्रयोगः ॥ विश्वं वेत्तीति विश्ववेदाः । तस्य सम्बुद्धिः । हे विश्ववेदः । विभक्तिव्यत्ययश्छान्दसः । विभावसो । विभावसुः । प्रकाशकः । तस्यसम्बुद्धिः । हे विभावसो । यज्ञं । श्रौतकर्मं । पूजादिकं वा पाहि । रक्ष । शतक्रतु निर्वर्तकत्वादग्नेश्शतक्रतुत्वं । हे शतक्रतो सर्वं पाहि ॥ इति पञ्चमानुवाकभाष्यम् ॥

मूलम्--यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दाँस्याविवेश । सतां शिक्यः प्रोवाचोपनिषदिन्द्रोज्येष्ठइन्द्रियाय ऋषिभ्यो नमोदेवेभ्यस्स्वधापितृभ्यो भूर्भुवः सुवरोम् ॥

भाष्यम्—यश्छन्दसामितियः । परशिवः । छन्दसां । वेदानां । वृषभः प्रभुः । ईशानःसर्वविद्यानामिति श्रुतेः । विश्वरूपः । चिदचित्प्रपञ्चात्मकः । सर्वोवैरुद्र इति श्रुतेः । छन्दोभ्यः। श्रुतिभ्यः पूर्वमुत्पन्नः । अहमेकः प्रथममासमिति श्रुतेः । छन्दांसि । वेदान् । आविवेश । प्रविवेश । तद्वाच्यरूपेण तत्रस्थित इत्यर्थः । "वेदरूपापराशक्तिर्वेदार्थस्तुमहेश्वर । इत्यागमोक्तेः"। शिक्यः । शिक्यवद्वेदानामाश्रयः । सः । परशिवेष्टलिङ्गधारी । ज्येष्ठः । देवानामग्रणीः । इन्द्रः शचीपतिः । इन्द्रियाय । इन्द्रियनामकाय । प्रोवाच । तां । शिवमहिमादिप्रतिपादिकां । उपनिषदं । श्रतिः । सम्यगुवाचेत्यर्थः । यद्वा । इन्द्रियाय । इन्द्र शिष्याय । इन्द्रियमिन्द्रलिङ्गमित्यादिना इन्द्रसृष्टाद्यर्थे इन्द्रियशब्दसाधुत्वं । शिवज्ञानप्रतिवन्धकशान्त्यर्थं । देवपितृव्याहृतीः कीर्तयति । नमोदेवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवरोमिति षष्ठानुवाकभाष्यम् ॥ ६ ॥

मूलम्—नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं
धारयिता भूयासं कर्णयोः श्रुतं । माचोढ्वं
ममामुष्य ॐ ॥ इति सप्तमोनुवाकः ॥

भाष्यम्—नमोब्रह्मण इति ॥ शिवभक्तप्रार्थनामन्त्रमिदं । ॐ । ओङ्काराय । ब्रह्मणे शिवाय । नमः । धारणं । त्वद्धारणं । धारणशब्दस्यसाकांक्षपदत्वात्तच्छब्दाध्याहारमावश्यकं । अर्थाच्छिवलिङ्गधारणमित्यर्थः । अनिराकरणं । अविभज्यमानसम्बन्धं यथा भवति तथा । अस्तु । भवत्वित्यर्थः । धारयिता । धारणविशिष्टः । भूयासं । भवेयं । अहमिति शेषः । अमुष्य । मे । शिवलिङ्गधारणविशिष्टस्य । मम । कर्णयोः श्रुतं । श्रवणपूर्वकलिङ्गाङ्गसामरस्यमित्यर्थः । माचोढ्वं । माच्यवत्वित्यर्थः।

तद्विस्मृतिर्नभवेदितियावत् । "ब्रह्माधिपति ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोमिति नमस्ताराय नम इत्यादि श्रुतिषु" ॥ "सर्वज्ञायनमस्तुभ्यमोङ्काराय नमोनम इत्यादिनालैङ्ग्यादि पुराणेषु" । ओङ्कारपदवाच्यत्वं शिवस्यैवप्रतिपादनात् । नान्यार्थं वक्तुं युक्तमिति वाक्यार्थः ॥ इति सप्तमानुवाकभाष्यंसमाप्तम् ॥ ७ ॥

मूलम्——ऋतं तपः सत्यं तपः श्रुतं तपः शान्तं तपो दमस्तपः शमस्तपोदानं तपो यज्ञस्तपो भूर्भुव स्सुवर्ब्रह्मैतदुपास्यैतत्तपः ॥

## अष्टमानुवाकः ॥

भाष्यम्—शिवलिङ्गधारिणामपि । शिवसाक्षात्कारहेतुत्वेन तपसो आवश्यकत्वमुपपादयन् तद्भेदानाह । ऋतं तप इत्यादिना ॥ ऋतं । मनसा परमेश्वरचिन्तनं ॥ १ ॥ सत्यं ॥ गायत्रीपञ्चाक्षर्याद्युपासकः सन् सत्यवाक्यनिष्ठागरिष्ठत्वं ॥ २॥ श्रुतं । अर्थपूर्वकत्वेनवेदागमपुराणादिश्रवणं ॥ ३ ॥ शान्तं । परदूषणादिसहिष्णुत्वं । दमः । वैराग्यबुध्या बाह्येन्द्रियनिग्रहः ॥ ५ ॥ शमः । शिवयोगाभ्यासतया अन्तरिन्द्रियनिग्रहः । दानं । गुरुचरेश्वराद्याराधनपूर्वकत्वेन सम्पादित द्रव्यव्ययं । यज्ञं । श्रौतकर्म । पूजावा । गुरुचरेश्वरदास्यं वा स्यात् । एतत्सर्वं तपश्शब्दबोधितो भवति । भूर्भुवस्सुवरिति । भूः भुवः सुवर् । इति व्याहृतित्रयं । ओं । ओंकाररूपं ब्रह्मशिव एवै तच्चिन्तनं च । तपः तपो भवतीतिभावः । इति व्याहृत्युपासनं स्तुतं भवति । उपास्य । उपास्येत्यर्थः । इति अष्टमानुवाक भाष्यं समाप्तम् ॥ ८ ॥

मूलम्—यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्यकर्मणो दूराद्गन्धोवाति । यथासिधारां कर्तेव हितामपक्रामेत् । यद्युवे युवे हवा विह्वदिष्यामि कर्तं वदिष्यामीत्येवमनृतादात्मानं जुगुप्सेत् ॥

इतिकूचिरुद्रे नवमानुवाकः समाप्तः ।

भाष्यम्—यथावृक्षस्येतिततश्च । पुण्यकर्मापि । अन्तःकरणनैर्मल्यद्वारा शिवज्ञानोपयोगी भवतीतिभावः । यथासिधारामिति । यथावृक्षस्येतिवाक्यस्यार्थस्पष्टतया भासमानान्न लिखितं । यथा । येन प्रकारेण । कर्तनं कर्तः । तस्मिन्नेव । कर्तेव । हितां जागरूकां । कर्तनशीलामित्यर्थः । असिधारां । खड्गधारां । अपक्रामेत् । अतिक्रामतीत्यर्थः । यद्युवे युवे हवा इति यदि उवा । इयुवा । इह । वा । इतिपदविभागः । उवा इवेत्येतौ भीतिद्योतकौ ॥ इयुवेति छान्दसः । वाशब्दो अवधारणार्थः । कर्तं । कर्तनप्रायं । असत्यं । यदिवदिष्यामि । इहवा । इहैव । विह्वदिष्यामि । ह्वदिश्छान्दसो धातुर्नाशार्थः । विन ओक्ष्यामि । समूलं नाशंप्राप्नुवामितिभावः । "समूलोवा एष परिशुष्यति योनृतमभिददातीति श्रुतेः" । इत्येवं । महानर्थः सम्भवतीति चिन्तयानृतादात्मानं । जुगुप्सेत् । आत्मानं निन्दां कृत्वा ततो निवर्तयदित्यर्थः । यद्वा । कर्तं । गर्तं । पतिष्यामि ।यिति । गर्तरूप संसारप्राप्नुवामितिचेत् । इहैवानृतात् । अनृतरूपसंसारात् । विह्वदिष्यामि । समूलं नाशं प्राप्नुवामिति । नवमानुवाकभाष्यंसमाप्तम् ॥

मूलम्——अणोरणीयान्महतो महीयानात्मा गुहायां निहितोस्य जन्तोः । तमक्रतुं पश्यति वीतशोको धातुःप्रसादान्महिमानमीशम् ॥ १ ॥

भाष्यम्—ब्रह्मस्वरूपाधिष्ठानप्रदर्शकमन्त्रमिदं ॥ अणोरणीयानिति ॥ अणोरणीयान् । अणुतरः । महतोमहीयान् महत्तमः । यथाकाशः सूक्ष्मवस्त्ववच्छिन्नतया सूक्ष्मं दृश्यते । महद्वस्त्ववच्छिन्नतया महत्तमतया दृश्यते । तद्वत्परमेश्वरस्यापिज्ञेयं । "अणोरणीयानहमेवतद्वदितिश्रुत्या" कैवल्ये शिवस्य तथोपदिष्टं । तत्परशिवः कुत्र भातेत्याकांक्षायामाह । आत्मागुहायामिति । आत्मा । परमात्मा । अस्यजन्तोः । जीवस्य । गुहायां । हृदयपुण्डरीकावच्छिन्नपरमाकाशे । निहितः । वर्ततेत्यर्थः । तत्र भातेति भावः । अक्रतुं । मायाविलक्षणं । तं महिमानं । कर्तुमकर्तुमन्यथा कर्तुं समर्थं । ईशं । शिवं । यः । पश्यति । उपासनया जानाति । स वीतशोकः । जननादिदुःखनिर्मुक्तो भवति । अत्र निरुपदेशशब्दस्य शम्भुरीशः पशुपतिश्शिवश्शूली महेश्वर इत्यमरकोशेन शिवेयोगरूढत्वात् । "ईशंज्ञात्वा अमृता भवन्ति । यदाचर्मवदाकाशमित्यारभ्य दुःखस्यान्तो भविष्यतीति श्वेताश्वतरे ।" ईशपदवाच्यत्वं मोक्षपदप्रदातृत्वं च शिवस्यैव प्रतिपादनान्ननारायणपरत्वं वक्तुं शक्यमिति वाक्यार्थः ॥ १ ॥

मूलम्——सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः सप्तजिह्वाः । सप्त इमे लोकायेषु चरन्ति प्राणा गुहाशयान्निहितास्सप्त सप्त ॥ २ ॥

भाष्यम्—सप्त प्राणाः इति॥ तस्मात्परमात्मनः । पञ्चज्ञानेन्द्रियाणि । मनो बुद्धिश्चेति सप्तप्राणाः । प्रभवन्ति । जायन्ते । सप्तार्चिषः । गार्हपत्याद्याः सप्तार्चिषः । काली । कराली । मनोजवा । धूम्रवर्णा स्फुलिङ्गिनी विश्वपदा इति सप्तजिह्वाविशिष्ट गार्हपत्याद्यग्नयः । समिधः । समिधाद्युपकरणानि । सप्तजिह्वाः । कालीकराल्यादिसप्तजिह्वाः । इमे । परिदृश्यमानाः । सप्तलोकाः । सप्तपदमुपलक्षणं । चतुर्दशभुवनानीत्यर्थः । प्रभवन्ति । उत्पद्यन्ते । येषु । चतुर्दश भुवनेषु । उक्ताः सप्त । अपिप्राणाः । गुहाशयेन । परमेश्वरेण । निहिताः सन्तः । सञ्चरन्ति । सप्तसप्तेतिवीप्सापुरुष भेदाभिप्रायेण ॥ २ ॥

मूलम्—अतः समुद्रा गिरयश्च सर्वे । अस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः । अतश्च विश्वा ओषधयो रसाश्च येनैष भूतस्तिष्ठत्यन्तरात्मा ॥ ३ ॥

भाष्यम्—अतः समुद्रा इति । अतः । अस्माच्छिवात् । सर्वे । समुद्रा गिरयश्च । उत्पद्यन्ते । अस्मात् । शिवात् । सिन्धवः । गंगायमुनादयः । सर्वरूपाः । तत्तदुचितरूपाः सन्त्यः । स्यन्दन्ते । प्रवर्तन्ते ॥ सर्वा ओषधयोरसाश्च । उत्पद्यन्ते । ननुस्वस्वोपादानेभ्यः अचेतनेभ्यः । उत्पन्नतयादृश्यमानानामेतेषां । कथं परमात्मन उत्पन्नत्वमित्याशङ्क्याह । येनैष इतियेन हेतुना । एषः शिवः । अन्तरात्मा भूतः । अन्तर्यामीसन् । तिष्ठति अतः सर्वकर्तृत्वं तस्योपपन्नमिति भावः । "आकाशवत्सर्वगतो निरंश इत्यादि श्रुतिषु।" "ईश्वरः सर्वभूतानां हृद्देशेर्ऽजुनतिष्ठतीत्यादि स्मृतिषु" तथास्पष्टमुपदिष्टम् ॥ ३ ॥

मूलम्—ब्रह्मादेवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणां श्येनोगृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्ते तिरेभन् ॥ ४ ॥

भाष्यम्—ब्रह्म देवानामिति ॥ देवानां मध्ये । ब्रह्मा । चतुर्मुखः । कवीनां शिवज्ञानविदां मध्ये । पदवीः वामदेवदधीच्यादयः विप्राणां मध्ये । ऋषिः । अगस्त्यः । मृगाणांमध्ये महिषः । महिषशब्दस्तु अवयवशक्त्यात्मकसत्ववत्वान्मह्यतेतिव्युत्पत्या गजेपि रूढत्वाद्गज इत्यर्थः । महपूजायामितिधातुः । महिषोवास्यात् । गृध्राणां मध्ये । स्येनः । चिल्लः । चिल्लयति । शिथिलयति । परपक्षीनिति चिल्लः । चिल्ल शैथिल्य इतिधातुः । वनानां । वन दुर्गाणां । स्वधितिः । छेत्ता । कुठारमित्यर्थः । सोमः । चन्द्रवदानन्दयिता। रेभन्। दीप्यमानः । सकलं पवित्रमत्येति । सकल पावनवस्त्वतिशय इत्यर्थः । सर्वान्तर्यामितयेदं सामानाधिकरण्यं । सर्वत्रज्ञेयं । एतेन ब्रह्मादिस्तम्बपर्यन्तं परमेश्वरकार्यत्वमुपदिष्टम् ॥ ४ ॥

मूलम्—अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्। अजोह्येको जुषमाणोनुशेते । जहत्येनां भुक्तभोगामजोऽयः॥५॥

भाष्यम्—अजामेकामिति ॥ पाशपशुपतिरूपतत्वत्रयलक्षण बोधकमन्त्रमिदम् ॥ न जायत इत्यजा । तां अजां । यज्जन्यं तदनित्यमिति व्याप्तिसत्वात्तद्भिन्नत्वबोधनार्थमत्युक्ता । एतेन प्रकृतेरपि सत्यत्वमुक्तं । "सदेव सौम्येदमग्र आसीत् । ब्रह्मवा इदमग्र आसीत् । नसन्न चासच्छिव एवकेवलः । एकमेवाद्वितीयं ब्रह्मेत्यादिश्रुतिषु"। सृष्टेः प्राक्प्रलयात्परं च । प्रकृते रसत्व

प्रतिपादनात्तस्यनाशाप्रतियोगित्वे । मुक्तजीवाभावप्रसङ्गाश्च । प्रकृति सत्यत्वमनङ्गीकरणमेवेतिचेन्न । प्रकृतेः परशिवशक्तित्वेन महाप्रलये शिवतादात्म्यरूपेणस्थितत्वात् । यदातमस्थमितिश्रुतौ । महाप्रलयेऽपि । तस्याः सत्वोपदेशात् । "तम एकमेवाग्रआसीदितिश्रुतौ"। सृष्टौ । प्रथमतस्तमोरूपप्रकृतेर्विद्यमानत्वात् । ब्रह्मवा इदमग्र आसीदित्यादिवत् । अत्रापि आसीदितिक्रियायाः स्थूलावस्थारूपतयास्थित्युपदेशाच्च प्रकृतेः सत्वं समञ्जसं । मन्वादिस्मृतिषु । सृष्टेः पूर्वं तमोरूपप्रकृतिसत्वं बहुधा प्रपंचितं । ग्रन्थविस्तरभयादत्र नलिखितं । तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः । "ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डित । इत्यादिना श्वेताश्वतरेकैवल्यादिषु" । शिवज्ञानिनां मायापाशविनिर्मुक्तिप्रतिपादनेनतस्य नाशत्वं सिध्यतीतिचेन्न । लोके । चोरस्यैकस्य । कर्मपरिपाकवशाद्राजानुग्रहाद्वा । कारागृहविमुक्तिसम्भवेपि । तस्य न यथा स्वरूपनाशः । तदितरेषां तद्विमुक्तिश्च । तद्वदत्राप्यनुसन्धेयं नोचेत् । वामदेवशुकमुक्तिप्रसङ्गेन सर्वजीवमुक्तिप्रसङ्गःस्यात् । तथाङ्गीकृतं चेदहं सुखी दुःखीत्यादिप्रत्यक्षानुभवविरोधः । एकां । मुख्यां । शुद्धसत्वप्रधानां वा । लोहितशुक्लकृष्णां । सत्वरजस्तमोरूपां । ब्रह्मविष्णुकालरुद्ररूपां वा । सरूपां । समानं सत्वादिगुणत्रयात्मकं ( रूपं ) स्वरूपं स्वभावमितिभावः । यस्याः सा सरूपा जात्येकवचनं । तां तथोक्तां बह्वीं प्रजां । बहुप्रजामित्यर्थः । जनयन्तीं उत्पादयन्तीं । " ननुसोकामयत बहुस्यां प्रजायेयेम इत्यादिषु " परमेश्वरस्य सर्वजगत्कारणत्वोपदेशात् । अत्र प्रकृतेर्जगत्कारणत्वोपदेशात्कथमुभयोः समन्वयः । कर्तृद्वयाङ्गीकारेऽनवस्थाप्रसङ्गश्चस्यादिति चेन्नैवं । प्रधानस्य परमेश्वरशक्तित्वेन जडत्वेन च । शक्तिकर्तृत्वबोधकश्रुतीनां तात्पर्यं तदधिष्ठानभूतपरमेश्वरस्यैवेत्यु-

पपद्यते। निरधिष्ठानशक्तेरभावात्। लोके। श्रोत्रं शृणोति। चक्षुः। पश्यति। शस्त्रं छिनत्तीत्यादिष्वचेतनत्वात्तत्तत्कर्तृत्वं यथा पुरुषस्य जीवस्योपपद्यते तद्वदत्राप्यनुसन्धेयं। एतेन। सत्यत्वजडत्वादिकं प्रधानस्य लक्षणमित्युक्तं भवति अजोह्येक इति एकोऽजः। जीवः। जुषमाणः। अनुभवन् सन्। अनुशेते। तिष्ठतीत्यर्थः। एतेन जीवानां संसारभोक्तृत्वमुच्यते। अन्यः। जीवाद्भिन्नः परमेश्वरः। भुक्तेन भोग्या भुक्तभोगाः। पुराकृत-वशादनुभवनीयमानाः तां। जहाति। कदापि तद्विकारं नगृह्णातीतिभावः। शिवस्य वशीकृतमायात्वात्। तथाश्वेता-श्वतरे। चतुर्थाध्याये। "अजामेकां लोहितशुक्लकृष्णामित्या-रभ्य। द्वासुपर्णौ सयुजौ सखायौ। समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योभिचाकशीति॥ समाने वृक्षे पुरुषो निमग्नो निशया शोचति मुह्यमान इत्यन्तेन" जीवेश्व-रयोरेकाधिकरण्यव्यपदेशेन तत्वत्रयप्रतिपादकमेव भवति। नतुमुक्तजीवबद्धजीवभेदप्रदर्शको भवति। एतेन। मायाभा-सेन जीवेशौकरोतीति मूलानुट्टंकितश्रुतिप्रामाणिकत्वेन जीवे-श्वरकल्पितवादकमिथ्याद्वैतमतं निराकृतम्॥ ५॥

मूलम्——हँसश्शुचिषद्वसुरंतरिक्षसद्धोता वेदिषदति-
थिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा-
गोजा ऋतजा अद्रिजा ऋतं बृहत्॥ ६॥

भाष्यम्——हँसः शुचिषदिति॥ हँसः। सूर्यः। शुचौ। ग्रीष्मे सीदति। तपतीति शुचिषत्। ग्रीष्मर्तौ तपन् सूर्योपि स एव। "असौयोवसर्पतेत्यादिनाशतरुद्रीये तथास्पष्टमुक्तं"। सर्व-त्रवसतीति वसुः वायुः। वस् निवसन इति धातुः। अन्तरिक्षः अन्तरिक्षे विद्यमानः। वायुः। सत्। स न। होता। वेद्यां

वर्तमानो ऋत्विग्विशेषः । अग्निर्वा । दुरोणं । गृहं । तत्रागत्य वर्तमानो । दुरोणशब्दवाच्यः । अतिथिः । सत् । स एव । नृषत् । मनुष्येषुविद्यमानः । नृषुतिष्ठतीति नृषत् । वरेषु देवेषु । तिष्ठतीति । वरसत् । देवतान्तर्वर्तीत्यर्थः । ऋतेतिष्ठतीति ऋतसत् । कर्मफलभूतलोके वर्तमानः । व्योम । गगनं । तत्र तिष्ठतीति व्योमसत् । अब्जाः । जलजाइत्यर्थः । गोजाः । भूमिजाइत्यर्थः । ऋतजाः । सत्कर्मफलभूतस्वर्गादिजाः । अद्रिजाः । पर्वतजाताश्च । बृहत् । बृहत्वधर्माश्रयः । व्यापक इत्यर्थः । ऋतं । सत्यभूतं । प्रकरणपठितशिवएवेत्यर्थः । सर्वोह्येष रुद्रइति श्रुतेः ॥ ६ ॥

भाष्यम्---यस्माज्जाता व परानैव किंच । वासय आविवेशा भुवनानि विश्वा प्रजापतिः प्रजया । संविदान स्त्रीणि ज्योतिँषि सच तेन षोडशी ॥ ७ ॥

भाष्यम्—यस्माज्जाता इति ॥ यस्मात्परशिवात् । सर्वपदार्थाजाताः । न परा । तद्भिन्नं किंचिदपिनास्ति । यतः । प्राक् । किंचन । किंचिदपि । वासय । नास्ति । नोत्पन्नमित्यर्थः । विश्वा । विश्वानि । सर्वाणीत्यर्थः । भुवनानि । भूरादिचतुर्दशलोकानि । आविवेश । अन्तर्यामितया । प्रवेशितवान् । प्रजापतिः ब्रह्मविष्णुकालरुद्राणां पतिः प्रजानां जीवानां वा पतिः । प्रजया । इन्द्रोपेन्द्रदिनेन्द्रादिसमूहेन संविदानः । उपास्यमानः । त्रीणि ज्योतीँषि । सूर्यचन्द्रवन्हिरूपाणि । सचते । प्रविष्ट इत्यर्थः । सः शिवः । षोडशी । ज्ञानेन्द्रियकर्मेन्द्रिय प्राणाः । पञ्चदश । अन्तःकरणमेकं मिलित्वा षोडशी लिङ्ग शरीरं भवति ॥ तत्रापि प्रविष्टइत्यर्थः ॥ ७ ॥

मुलम्—विधर्तारं हवामहे वसोः कुविद्वनाति नः ।
सवितारं नृ चक्षुषम् ॥ ८ ॥

भाष्यम्—विधर्तारमिति ॥ विशेषेणजगतो धर्तारं । जगद्धारकमित्यर्थः । सवितारं । सूर्यं । जगत्स्रष्टारं वा नृचक्षुषं । नृणां चक्षुरिव ज्ञानप्रदं । शिवं ।;हवामहे । स्तुत्या आवाह्वयामः । नः । अस्माकं । स शिवः । कुवित् । शश्वत् । वसोः । धनस्य । दनाति । ददात्वित्यर्थः ॥ ८ ॥

मूलम्—अद्यनो देवसवितः प्रजावत्सावीस्सौभगं ।
परा दुष्वप्नियंसुव ॥ ९ ॥

भाष्यम्—अद्यनोदेवेति ॥ हे देव । द्योतमान । सवितः । जगत्कारणभूत । अद्य । इह । प्रजावत् । प्रजासमृद्धिमत् । सौभगं । सौभाग्यं । नः । सावीः । असावीः । उत्पादितवानसि । दुष्वप्नियं । दुस्स्वप्नजनितं भयं । परासुव ।। पराभवंकुरु । नाशयेत्यर्थः ॥ अत्र सवितः इत्यत्र । सूर्यान्तर्वर्तिशिव इति वार्थः स्यात् ॥ ९ ॥

मूलम्—विश्वानि देव सवितु र्दुरितानि परासुव ।
यद्भद्रं तन्म आसुव ॥ १० ॥

भाष्यम्—विश्वानिदेवेति ॥ हे देव । सवितः । सूर्यमध्य वर्तितया भासमान शिव । विश्वानि । सर्वाणि । दुरितानि । पापानि । परासुव । पराभवं कुरु । नाशयेत्यर्थः । यद्भद्रं । यन्मङ्गलं । तत् । ममार्थे म इत्यव्ययः । म । मा इतिवार्थः स्यात् । दीर्घ व्यत्ययश्छान्दसः आसुव । प्रापयेत्यर्थः ॥ १० ॥

मूलम्—मधुवाता ऋतायते । मधुक्षरन्तिसिन्धवः ।
माध्वीर्नस्सन्त्वोषधीः ॥ ११ ॥

भाष्यम्—मधुवाता इति । ऋतायते । नः । परमेश्वर ध्यान विशिष्टास्मस्यं । वाताः । मधुरन्तु । आनन्ददुहो भवन्तु । सिंधवोपि । तथाभवन्तु । ओषधीः । माध्वीः । आनन्द भूताः । सन्तु । भवन्त्वित्यर्थः ॥ ११ ॥

मूलम्—मधुनक्तमुतोषसि । मधुमत्पार्थिवँ रजः ।
मधुद्यौरस्तु नः पिता ॥ १२ ॥

भाष्यम्—मधुनक्तमिति ॥ नक्तं । रात्रावित्यर्थः । उत । किंच । उषसि । प्रातः काले । सर्वं पदार्थं । मधु । मधुवदाचरन्त्वित्यर्थः । क्षौद्रवदाचरन्त्विति भावः । पार्थिवँ । पृथिव्यांवर्तमानं । रजः । दोषविशिष्टसर्वमपि । मधुमत् । अत्यन्तानन्दवत् । अतिमधुररसशिवद्धा । अस्तु ॥ १२ ॥

मूलम्—मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः ॥ १३ ॥

भाष्यम्—मधुमान्ना इति नः । अस्माकं । वनस्पतिः । वसन्तः । मधुमान् । आनन्दयिता । सूर्यः मित्रः । मधुमाँ । मधुमानित्यर्थः । अस्तु । भवतु । नः । गावः । माध्वीः । क्षीरप्रदानेन सर्वदा आनन्दयितारः भवन्तु ॥ १३ ॥

मूलम्—घृतं मिमिक्षे घृतमस्य । योनिर्घृते श्रितोघृतमवश्य धाम । अनुष्वध मामहमादयस्व
स्वाहा कृतं वृषभ वाक्षि हव्यम् ॥ १४ ॥

भाष्यम्-घृतं मिमिक्ष इति। अत्र घृतशब्देन रस्यं ब्रह्मोच्यते। प्रसिद्धार्थेपिनदोषः। मिमिक्षेसेक्तुमिच्छति। मिहसेचन इतिहि धातुः। सर्वं वस्तु स्वादुकरोत्वित्यर्थः। घृतमेव जगतो योनिः। कारणमित्यर्थः। घृते श्रुतः। पक्वः। तत्रैवच-लीनः। तदेवचधाम। स्थानं। हे वृषभ। अग्ने अघोरतनुविशिष्टपरशिव इति यावत्। स्वाहा कृतं। हव्यं। हविः। वक्षि। वहसि। तद्धविः। अनुष्वधं। अनुकृतास्वधायेन। अनुष्वधं। आवहस्व। अस्य हविषः। स्वधासादृश्यमावहस्व। शेषभूताञ्जनेन हविषा मादयस्व। हर्षयेत्यर्थः॥ १४॥

मूलम्—समुद्रादूर्मिर्मधुमां उदान तदुपाँशुना सममृतत्वमानत्। घृतस्य नाम गुह्यं यदस्ति-जिह्वादेवानाममृतस्य नाभिः॥ १५॥

भाष्यम्—समुद्रादिति॥ घृतस्तुतिरियं। अमृतार्थं मध्यमात्समुद्रान्मधुमान्मूर्तिः। मधुतरङ्गः। उदानत्। उत्पन्नः। सः। तरङ्गः। उपांशुना। उपांशुजप्येन रहस्यमन्त्रेण। सममृतत्वं। सम्यगमृतत्वं। आनत्। प्राप्तः। तदेव घृतमितिभावः। एवं भूतस्य घृतस्य गुह्यं। रहस्यं। नाम। प्रसिद्धिः। यदस्ति। तत्। देवानां जिह्वा। देवजिह्वासदृशं। अमृतस्य नाभिरितिच। अमृतस्य आधारभूतं। परमेश्वरपरतया योजनायां उपास्यमान शिव एव घृतशब्देनोच्यतेतिज्ञेयम्॥ १५॥

मूलम्—वयं नाम प्रबृ वा। मा घृतेनास्मिन्यज्ञे धारयामो नमोभिः। उपब्रह्म शृणवच्छस्यमानं चतुः श्रृङ्गो वमिद्गौर एतत्॥ १६॥

भाष्यम्—वयं नामेति ॥वयं । घृतेन । घृतशब्देन । नाम । तस्य । नाम इत्यर्थः । प्रब्रवामि । वदामि । अस्मिन्यज्ञेन नमोभिः । नमः शब्दैः । धारयामः । स्तोत्रंकुर्मः । अस्माभिः । छस्यमानं । स्तूयमानं । एतत् । घृतं । चतुः शृङ्गः । शृङ्गशब्देन ज्ञापको वेदः । चतुष्पाद्विशिष्टशिवागमा उच्यन्ते । चतुर्वें दाष्टाविंशत्यागमप्रतिपाद्य इत्यर्थः । गौरः । हिरण्मयवर्णः । ब्रह्माशिवः । नमोहिरण्यवाहवे हिरण्यवर्णाय इत्यादिषु गौरवर्णविशिष्टत्वं शिवस्यस्पष्टमुपदिष्टं ।उपश्टणवत् । श्टणोतु । सखलु । एतत् । घृतं । अवमित् । अवमीदित्यर्थः । सर्वोत्तर-तयासृष्टवानित्यर्थः ॥ १६ ॥

मूलम्—चत्वारिशृङ्गा त्रयोस्य पादाः । द्वे शीर्षे सप्त हस्ता सो अस्य । त्रिधाबद्धो वृषभो-रोरवीति महादेवो मर्त्याँ आविवेश ॥१७॥

भाष्यम्—चत्वारिशृङ्गा इति ॥ अस्य । शिवस्य ब्रह्मणः । चत्वारि ऋग्यजुः सामाथर्वणरूप चतुरोवेदाः । शृङ्गाः । मुख्यानि । परमेश्वरसत्वे वेदानां मुख्यप्रामाणिकत्वमित्यर्थः । "शास्त्रयोनित्वादितिसूत्रे" भगवता वादरायणेनापि । तदधिकरणे पण्डितभाष्यकारैरपि तथास्पष्टमुक्तं । उत । क्रियाचर्ययोग-ज्ञानरूप शिवागम चतुष्पादा वास्युः । त्रयः । सच्चिदानन्दाः । पशुपाशपतिज्ञानानिवा ब्रह्मविष्णुकालरुद्रावा । रजस्तमोगुणावा विराड्ढिरण्यगर्भा व्याकृतावा । पादाः । पदः । स्युः । द्वे शीर्षे । घोराघोरात्मके द्वे शिरसी । तस्यैते तनुवौ घोरान्याशिवान्येति श्रुत्युक्तरीत्या शरीरभेदेन शिरोभेदः । अग्निमुखं ब्राह्मणमुखं-वा । "मुखद्वयं महेशस्य स्यादग्निर्ब्राह्मणस्तथेतिस्कान्दोक्तेः" । "अहं भक्तस्य जिह्वाग्रोदश्नामिकमलोद्भवेतिपुराणान्तरे च" तथा-

रूपष्ठमुक्तं। अस्य शिवस्य सप्त हस्ताः। आधारादिसहस्रान्त सप्तचक्राः। महदहङ्कारपंचभूतानिवा। सप्तोर्ध्वलोकाः। अधोलोकावास्युः। वृषभः। ब्रह्माविष्ण्वादिभ्योधिकः। विश्वाधिकोरुद्रोमहर्षिरितिश्वेताश्वतरे तथा श्रूयते। त्रिधाबद्धः। महेश्वरसदाशिवशिवरूपतयात्रिधाभूतः। इष्टप्राणभावलिङ्गात्मकतयावात्रिधाभूतः। सः शिवः। रोरवीति। रुशब्दइतिधातुः। व्यवहरति। नामरूपवत्करोतीत्यर्थः। तादृशो महादेवः। महादेव इत्यर्थः। शिवः। मर्त्यान्स्थावरजंगमात्मकसर्वपदार्थान्। आविवेश। अन्तर्यामितयाप्रविवेशेत्यर्थः। भगवता बादरायणेनशिवसहस्रनामावल्यादौ। सर्वज्ञशिखामणिना भट्टभास्करेण भाट्टभाष्ये मङ्गलश्लोके। सर्वशास्त्रधुरन्धरेण अमरमुनिना। तत्पुरुषस्यविद्महे महादेवस्य धीमहीतिरुद्रगायत्र्यां। वेदपुरुषेणापि। महादेव रुद्रमहेश्वरेशशिवसदाशिवशब्दानां गवादि शब्दवद्योगरूढ्या। पङ्कजादिशब्दवद्यौगिकरूढ्याच शिवपरत्वेन राद्धान्तितत्वात्। रूढिर्योगमपहरतीतिन्यायात्। स्थानप्रकरणलिङ्गात्समन्वय इति न्यायाच्च। नारायणपरत्वं योजितुं नशक्यमत्र महादेवशब्दस्येति राद्धान्तितं॥ नारायणानुवाकेस्पष्टं कुर्मः। अतोत्र संक्षेपितं। एतन्मन्त्रस्याग्निपरत्वे अग्नेः शिवशरीरत्वेन। शरीरशरीरिणोरभेदाच्चनास्माकं विरोधः प्रसज्यते॥ १७॥

मूलम्—त्रिधाहितं फणिभिर्गुह्यमानं गवि देवा
सोघृतमन्वविन्दन्॥ इन्द्रएकं सूर्य एकं।
जजान वेनादेकं स्वधयानिष्टतक्षुः॥ १८॥

भाष्यम्-त्रिधाहितमिति॥ त्रिधामहेश्वरसदाशिवशिवरूपेण। इष्टप्राणभावलिङ्गात्मकेन वा। आहितं। अवतीर्णं। फणिभिः।

फणैः । गुह्यमानं । आच्छादितं । सर्वाभरणत्वादितिभावः । उत । फणिभिः । गायकस्वरूपब्रह्मविष्ण्वादिभिः । वेदपुरुषैर्वा । गुह्यमानं । स्तूयमानं । फणस्तुतावितिहिधातुः । गविघृतं । गोघृतं । अमृतरूपशिवं । देवाः । ब्रह्मविष्णुकालरुद्रादयः । अन्वविन्दन् । उपासितवन्तः। "हरिस्ते साहस्रं कमलमित्यादिना" तथास्पष्टमुपदिष्टं सर्वत्र ग्रन्थविस्तरभयान्नलिखितं । तेषां-मध्ये । इन्द्रः । इन्द्रशब्दोपलक्षितब्रह्मा । एकं महेश्वरतत्वं । इष्टलिङ्गंवा । अन्यः । सूर्यशब्दोपलक्षितमहाविष्णुः एकं । प्राणलिङ्गं । सदाशिवतत्वं वा । "ततोऽव्ययात्मा स हरिः स्वहृत्पङ्कजाशायिनं । दर्शयामास देवेभ्यो मुरारिर्लिङ्गमैश्वर-मिति वामनपुराणे" विष्णोः प्राणलिङ्गोपासकत्वं स्पष्टमुपदिष्टं । वेनात् । सर्वव्यापकशिवतत्वात्प्रादुर्भूतं । शिवतत्वं । भाव-लिङ्गात्मकं वा । एकं । जजान । आश्रितः । उपासित इत्यर्थः । स्वधया । श्रद्धया । निष्टतक्षुः । उपासितवन्तः । सर्वव्यापक शिवतत्वात्प्रादुर्भूतान् तत्वत्रयान् । अधिकारविशेषतयोपासत इति यावत् ॥ १८ ॥

मूलम्—यो देवानां प्रथमं पुरस्ताद्विश्वाधियो रुद्रो
महर्षिः । हिरण्यगर्भं पश्यत जायमानँ
सनो देवः शुभया स्मृत्या संयुनक्तु ॥१९॥

भाष्यम्—यो देवानमिति यः। परशिवः । देवानां । प्रथमं । ब्रह्मविष्णुकालरुद्राणां सृष्टेः पूर्वं । पुरस्तात् । तत्प्रलये च । स्थित इतिशेषः । सः । विश्वाधियः । विश्वाधिक इत्यर्थः । विश्वाधिष्ठानमितिवास्यात् । परात्परमिति श्रुत्युक्तरीत्या ब्रह्मनारायणादिसर्वदेवताश्रेष्ठ इति यावत् । 'वामदेवायनमः श्रेष्ठायनमः इत्युत्तरत्रश्रूयते"। रुद्रं । ब्रह्मनारायणादि जननमरणा-

धिव्याधिरूपदुःखं द्रावयतिनाशयतीतिरुद्रः । महर्षिः । "नानृषिः कुरुते काव्यमित्युक्तरीत्या" । सर्वनिगमागमादिशास्त्रजनक इत्यर्थः । "यो वै वेदाँश्च प्रहिणोति तस्मै इत्यत्र चकारात्" वेदेतर शिवागमादयो बोध्यन्ते । ईशानः सर्वविद्यानामितिश्रुतेः । "शास्त्रयोनित्वादिसूत्रात्तथा समञ्जसं । हिरण्यगर्भमिति । जायमानँ । जनिष्यमाणं । हिरण्यगर्भं । चतुर्मुखं । अपश्यत् । वीक्षितवान् । हिरण्यगर्भं जनयामासेत्यर्थः । अत्रहिरण्यगर्भ पदं विष्ण्वादीनामुपलक्षणं । "ध्यायीतेशानं प्रध्यायितव्यं । सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्तेसम्प्रसूयन्तेत्यथर्वणशिखायां तथा श्रूयमाणत्वात्" स देवः । महेश्वरः । नः । अस्मान् । शुभया । मङ्गलप्रदया । स्मृत्या । धिया । संयुनक्तु । संयोजयत्वित्यर्थः । श्वेताश्वतरेचतुर्थाध्याये । "यो देवानां प्रभवश्चोद्भवश्चविश्वाधिकोरुद्रो महर्षिरित्यादिना" चतुर्मुखजनकत्वं शिवस्यस्पष्टमुपदिष्टत्वादत्रननारायणस्यावकाशः ॥ १९ ॥

मूलम्—यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो
न ज्यायोस्ति कश्चित् । वृक्षइवस्तब्धोदिवि
तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ २० ॥

भाष्यम्—यस्मात्परमिति ॥ यस्मात् । परशिवात् । उत्कृष्टं अपरं । समानं । किंचित् । किंचिदपि नास्ति । श्वेताश्वतरषष्ठाध्याये । "नतस्यकार्यं करणं च विद्यते । नतत्समश्चाप्यधिकश्च दृश्यतेति" "एक एवरुद्रो न द्वितीयायतस्थेत्यथर्वशिरसि च" शिवस्य तथात्वं स्पष्टमुपदिष्टं । यस्मात् । शिवात् । अणीयः । अणुतरः । ज्यायान् । महत्तमश्च । कश्चित् । कोऽपि । न । नास्ति । एकः । एतादृशनिस्समाभ्यधिकः शिवः । दिविमहाकैलासे दहराकाशे वा । तिष्ठति । आस्ते । तेन । पुरुषशब्दि-

तशिवेन । "पुरुषो वैरुद्रस्तन्महो नमो नमः । तत्पुरुषायविद्महे-त्यादिषु" । पुरुषशब्दस्यशिवे रुढिर्दृश्यते । पङ्कजादिवत् । सर्वमिदं । परिदृश्यमान चराचरप्रपञ्चंपूर्णं । भरितमित्यर्थः । श्वेताश्वतरेतृतीयाध्याये । "यस्मात्परं नापरमस्ति किंचिदित्या-रभ्य । तस्मात्सर्वगतश्शिव इत्यन्तं" शिवस्यतथात्वं स्पष्टमुक्त-मतोत्र नारायणपरत्वं वक्तुं न शक्यम् ॥ २० ॥

मूलम्—नकर्मणा न प्रजयाधनेन त्यागेनैकेन मृतत्व-
मानशुः ॥ परेणनाकं निहितं गुहायां विभ्रा-
जतेतद्यतयो विशन्ति ॥ २१ ॥

भाष्यम्--एवं परशिवमाहात्म्यमुक्त्वा तत्साधकाः कति-विधा इत्याकांक्षायामाह । न कर्मणेति । कर्मणा । श्रौतस्मार्त कर्मानुष्ठानेन । मोक्षोनास्तीत्यर्थः। एतेन दारेषणत्यागः सूच्यते। प्रजया पुत्रासन्तानेन । न । नास्ति । एतेन पुत्रेषणत्यागः सूच्यते । धनेन । सुवर्णादिना । न । मोक्षो नास्ति । किन्तु । त्यागेन । पूर्वोक्तईषणत्रयत्यागेन । एके । केचित्सन्यासिनः । अमृतत्वं । जरामरणवर्जिताजितेन्द्रियत्वं । अमृतस्वरूपमहेश्वर-तत्वं वा । आनशुः । प्राप्ता इत्यर्थः । एतेन । दृढवैराग्यवन्तः ' देहसिद्धिं महेश्वरतत्वं च प्राप्नुवन्तीति बोध्यते । यतयः । शिवलिङ्गाराधनपूर्वकत्वेन मोक्षप्रयत्नस्वभावभक्ताः । गुहायां दहरपुण्डरीके । नाकं । तदवच्छिन्नपरमाकाशे । विभक्तिव्यत्य-यश्छान्दसः । परेण । सर्वव्यापकशिवेन । निहितं । भक्तोपास-नार्थं परिच्छिन्नतया तत्रस्थितं । यत् । प्राणलिङ्गं । विभ्राजते । विराजते तत् । प्राणलिङ्गं । विशन्ति । प्राप्नुवन्ति। एतेन परमेश्वर चरणारविन्दशरणवरणलक्षणभक्तिनिष्ठागरिष्ठाः । सगुणनिर्गु-णात्मकप्राणलिङ्गरूपसदाशिवतत्वं । प्राप्नुवन्तीतिभावः ॥ २१ ॥

मूलम्—वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्वाः। तेब्रह्मलोकेतु परान्तकाले । परामृतात्परिमुच्यन्तिसर्वे ॥ २२ ॥

भाष्यम्—वेदान्तविज्ञानसुनिश्चितार्थाइति ॥ यतयः । मोक्षप्रयत्नशीलाः । वेदान्तविज्ञानसुनिश्चितार्थाः । उपनिषच्छास्त्रबोधितपशुपाशपतिज्ञानेन सम्यँनिश्चितप्रयोजनाः । पाशुपतव्रतवन्त इत्यर्थः । सन्यासयोगात् । सता । परशिवेन न्यस्यतीति सन्यासः । परशिवकलाविशिष्ट इत्यर्थः । लिङ्गमितियावत् । वातुलागमे। "यथाकलातथाभाव इत्यारभ्य । साकलापरमासूक्ष्मा तत्वानां बोधिनी परा । तामाकृष्ययथान्यायं लिङ्गेसमुपवेशयेदिति" तथा स्पष्टमुक्तं ॥ तस्ययोगः। संयोगः । धारणमित्यर्थः। शिवलिङ्गधारणमितियावत् । "अमृतस्यदेवधारणो भूयासमित्यत्र बाह्यलिङ्गधारणस्य मोक्षोपयोगित्वेन बहुधाप्रपञ्चितत्वादत्र" संक्षिप्तं । निर्मलान्तः करणविशिष्टाः सन्तः । ते सर्वे महापाशुपतव्रतस्थाः । ब्रह्मलोकेतु । कैलासेतु । किञ्चित्कालं स्थित्वा ततः । परान्तकाले । सूक्ष्मशरीरवियोगकाले परामृतात् । महाकैलासात् । परिमुच्यन्ति । त्यजन्ति । लिङ्गशरीरभङ्गद्वारा सर्वव्यापकपरशिवतत्वं प्राप्नुवन्तीतिभावः । उत । सति। ब्रह्मणि । मनोन्यस्यतीति सन्यासः। सचासौयोगः। सन्यासयोगः । हठराजादयः। तस्मात्। सन्यासयोगादित्यर्थः। एतेन । भावलिङ्गोपासनमुक्तं भवतीति सर्वं सुस्थितं ॥ २२ ॥

मूलम्—दहरं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसँस्थं । तत्रापिदहरं गगनं विशोकं तस्मिन्यदन्तस्तदुपासितव्यम् ॥ २३ ॥

भाष्यम्—तत्प्राणलिङ्गोपसनभक्ताः । स्वशरीरे कुत्रतदु-पासनं कर्तव्यमित्याकांक्षायामाह । दहरमिति । दहरमल्पं । विपापं । पापरहितं । परवेश्मभूतं । परमेश्वरगृहभूतं । पुरं । शरीरं । तन्मध्येतिष्ठतीति पुरमध्यसँस्थं । शरीरान्तर्वर्तीत्यर्थः । यत्पुण्डरीकं । यद्धृदयकमलं । वर्तते । तत्रापि । तस्मिन्नपि । दहरं । अतिसूक्ष्मं । अङ्गुष्ठमात्रमित्यर्थः ॥ "दहरेङ्गुष्ठमात्रेतु उमाकान्तमहर्निशमिति श्रुत्यन्तरे"तथा श्रूयते । विशोकं । आ-नन्दरूपं । गगनं । चिदाकाशं । यदस्ति । तस्मिन् । चिदाकाशे । अन्तः । मध्यप्रदेशे तत् । प्राणलिङ्गं । उपासितव्यं । उपासनं कर्तव्यम् ॥ २३ ॥

मूलम्—योवेदादौस्वरः प्रोक्तोवेदान्ते च प्रतिष्ठितः ।
तस्यप्रकृतिर्लीनस्ययः परस्स महेश्वरः॥२४॥
इतिनारायणनामकऋूचिरुद्र दशमानुवाकः॥

भाष्यम्—तद्दहरोपस्यमानस्य मुख्यनाम किमित्याकांक्षायामाह । यो वेदादाविति ॥ वेदादौ । वेदपाठोपक्रमे । यः स्वरः । प्रणवः । प्रोक्तः । तदुपसंहारेच । यः । प्रतिष्ठितः । प्रकृतिः । अकारोकारमकाररूपाप्रकृतिः । तस्याः । लीनस्य । लीनंगमितब्रह्मविष्णुकालरुद्रस्य । तस्य । प्रणवस्य । यः । परः । प्रतिपाद्यमानोयः । सः । महेश्वरः । महाश्चासौ ईश्व-रश्च महेश्वरः ॥ त्रिमूर्त्यतीतपरशिव इत्यर्थः । एतेन । दहरो-पास्यमानंवस्तु । महेशशब्दरूढ्यर्थबोधितपरशिव एवेति रा-द्धान्तितम् ॥..."...इतिदशमानुवाकभाष्यं समाप्तम् ॥ २४ ॥

मूलम्—सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवं ।
विश्वंनारायणं देवमक्षरं परमं पदम् ॥

विश्वतः परमान्नित्यं विश्वँ नारायणँहरिः ।
विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ॥
पतिँ विश्वस्यात्मेश्वरँ शाश्वतं शिवमच्युतं।
नारायणं महाज्ञेयं विश्वात्मानं परायणम् ॥
नारायणपरोज्योतिरात्मा नारायणः परः ।
नारायणपरं ब्रह्म तत्वं नारायणः परः ॥
नारायणपरोध्याता । ध्यानं नारायणः परः
यच्च किंचिज्जगत्यस्मन्दृश्यते श्रूयतेऽपि च ॥
अन्तर्बहिश्च तत्सर्वं व्याप्यनारायणःस्थितः।
अनन्तमव्ययं कविँ समुद्रेन्तं विश्वशंभुवं पद्म-
कोशे प्रतीकाशँ हृदयं चाप्यधो मुखं। अधोनि-
ष्ट्या वितस्थ्यान्तेनाभ्यामुपरितिष्ठति ॥ ज्वा-
लमालाकुलं भाति विश्वस्यायतनँ महत् ।
सन्ततँ शिलाभिस्तुलंबत्याकोशसन्निभम् ॥
तस्यान्ते सुषिरँ सूक्ष्मं। तस्मिन् तु सर्वं प्रति-
ष्ठितं। तस्य मध्ये महानग्निर्विश्वार्चि र्वि-
श्वतोमुखः । सोग्रभुग्विभजन्तिष्ठं नाहारम-
जरः कविः । तिर्यगूर्ध्वमधश्शायी रश्मयस्त
स्यसन्तता । सन्तापयति स्वंदेहमापादतल
मस्तकं । तस्यमध्ये वह्निशिखा अणीयोर्ध्वा
व्यवस्थितः। नीलतोयदमध्यस्था विद्युल्लेखेव

भास्वरा । नीवारशूकवत्तन्वी पीताभास्व-
त्यणूपमा ॥ तस्या शिखायामग्रे परमात्मा
व्यवस्थितः । स ब्रह्मा स शिवस्सहरिस्से-
न्द्रस्सोऽक्षरः परमस्वराट् ॥ अपिवासन्तता
षट् च ॥

इति नारायणे एकादशोनुवाकः ॥

भाष्यम्—पूर्वानुवाके दहरविद्यां विधाय तत्रोपास्यमानः परशिव एवेति शिवैकान्तिकमहेश्वरपदेन स्पष्टमुपदिश्येदानीं किं तन्माहात्म्यं । तद्दहरं कुत्रवर्तते । तल्लक्षणं किं । तत्रजीवः केनरूपेण विद्यते । परमात्मा कुत्रवर्तते । इन्द्रोपेन्द्रादिवद्यव-स्थिशब्दवाच्योवा । सर्वशब्दवाच्योवेत्यादिसकलशङ्काविध्वं सनार्थं सहस्रशीर्षानुवाकमारभ्यते । ननु । एतदनुवाके । परशिवबोधक शिवशम्भ्वादिशब्दानां सत्वेपि । विष्णवैकान्तिक-नारायणशब्ददर्शनात् । साक्षाद्विष्णुपरत्वमेवैतदनुवाकस्येति चेदुच्यते । पण्डिताराध्यवेमनाराध्योद्भटाराध्य नीलकण्ठाचार्य-भास्करभट्टाचार्यादि श्रौतवीरशैवसिद्धान्तस्थापकपूर्वाचार्यैस्स-र्वशैवशास्त्रज्ञानधुरंधरहरदत्ताचार्याप्पयदीक्षितादिमहद्भिश्च । पाणिनीयशास्त्ररीत्या शिवेणत्वबाधानिरसनं कृत्वा । सहस्र-शीर्षानुवाकस्य शिवपरत्वेन बहुधाराद्धान्तितं । ग्रन्थविस्तर-भयाद्बालानांदुरवगाहत्वाच्चात्रनलिखितं । बालानां सुखबोधो-पयोगितयात्रनारायणशब्दस्य शिवपरत्वं ब्रवीमि । ननु ॥ नारायणशब्दस्तु । सर्वकारण- सर्वव्यापकपरशिववाचको न भवति वा । उत । उमार्धाङ्ग नीलकण्ठत्वादिधर्मविशिष्ट सदाशिववाचको न भवतिवा । नाद्यः । "तदनन्यत्वमारं-

भणशब्दादिभ्य इत्यधिकरणे"। भगवताव्यासेन । कार्यकारणयोरनन्यत्वव्यपदेशात् । ध्यायीतेशानं प्रध्यायितव्यं । सर्वमिदं ब्रह्मविष्णुरुद्रास्ते सम्प्रसूयंतेति अथर्वणशिखायां । शिवाद्ब्रह्मविष्ण्वाद्युत्पत्तिश्रवणात् । तेषां शिवोपादानतया शिवात्मकत्वाच्च । नारायणादिसर्वशब्दवाच्यत्वं शिवस्य समंजसं भवति ॥ तस्मादेवैतदुपसंहारे सर्वोवै रुद्रस्तस्मै-रुद्राय नम इत्यादिना रुद्रस्य सर्वात्मकत्वमुपदिष्टं । उत । "एकोविष्णुर्महद्भूतं पृथग्भूतान्यनेकश इत्यादि श्रुतिस्मृतिषु"। शिवातिरिक्तब्रह्मविष्ण्वादीनां भूतत्वोपदेशात् । क्षित्यादि जीवान्तरूपाष्टशरीरकत्वेन शिवस्य स्थित्युपदेशात् । अष्टमूर्तिरहिर्बुध्न्यो महाकालो महानट इत्यमरकोशेन । शिवसहस्रनामावल्यादौ भगवता बादरायणेन च । अष्टमूर्तिपदस्य शिवैकान्तिकत्वेन निर्देशात् । "शरीरवाचकशब्दाः शरीरिणिप्रवर्तन्ते तिमीमांसानियमात्" । उपक्रमोपसंहारमध्यपरामर्शेषु । ईशरुद्रमहेश्वराम्बिकापत्युमापति पशुपत्याद्यनितरसाधारण-शिवलिङ्गबाहुल्यदर्शनात् । "विशेषलिङ्गानुरोधेन सामान्यलिङ्गस्य समन्वयमिति मीमांसान्यायात्"। कैवल्ये । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं । प्रशान्तं । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् । स ब्रह्मा-सशिवस्सेन्द्रः सोक्षरः परमः स्वराट् । स एव विष्णुः सप्राणः सकालोग्निस्सचन्द्रमाः । सएव सर्वं यद्भूतं यच्च भव्यं सनातनं । ध्यात्वा तन्मृत्युमत्येतिनान्यः पन्था विमुक्तयेत्यादिना, शिवस्य परब्रह्मणः । सर्वमूर्तित्वसर्वशब्दवाच्यत्वव्यवस्थापनत्वाच्च । नद्वितीयः ॥ नविद्यते राः । धनं । यस्यासौ अराः । निर्धनः । सनभवतीति नाराः । धनाधिपः । कुवेरइत्यर्थः । तं सख्येन अणति सल्लसतीति नारायणः ॥ १ ॥ न । राः ।

अराः । धनाभावः । अणः । सुखाभावः । यद्भक्तेस्तौन । नस्यातां । सनारायणः । रायं वेदरूपश्रियं । अणति । आख्याति सः । रायणः सनभवतीति अरायणः । अरायणो नभवतीति नारायणः । योवै वेदांश्च प्रहिणोति तस्मैइति श्रुत्युक्तरीत्या वेदप्रवक्तेत्यर्थः ॥ अलमनेन ॥ पूर्वाचार्यश्लोकान्युच्यन्ते ॥

अराः प्राह धनाभावं । सुखाभावं वदत्यणः । नतौस्यातां यस्यभक्तेः । सवैनारायणः शिवः ॥ १ ॥ अरास्तुनिर्धनो ज्ञेयो नाराः किल धनाधिपः । तमणन् सल्लपन् सख्यात्सवैनारायणः शिवः ॥ २ ॥ रायंश्रियंवेदरूपां योणत्याख्यातिरायणः । अरायणो योन भवेत्सवै नारायणः शिवः ॥ ३ ॥ नारैशब्दोदित श्रीमान् । स्यादकाराभिदोहरिः । तस्यनोनिर्वृतिर्यस्मिन् । सवैनारायणः शिवः ॥ ४ ॥ नारयणः सदास्वर्णयुक्तो मेरुस्स्यात्कार्मुकायुधः । योस्याणष्टं कृतिकरस्सवै नारायणः शिवः ॥ ५ ॥ अयश्शुभावहविधिर्णः सुखं च द्वयं यतः । नारस्यनरवृन्दस्य स वै नारायणः शिवः ॥ ६ ॥ नरोविष्णुस्तदीयोसावायोलाभः शरादिभिः ॥ तेनणः शर्मयस्येति सवैनारायणः शिवः ॥ ७ ॥ नरोर्जुनस्तत्सम्बन्धियस्त्वयोभक्तिनिश्चयः । ततोणः शर्मयस्येति सवैनारायणः शिवः ॥ ८ ॥ नारान्वेदानयन्तेये नारायास्ते बुधोत्तमाः । णस्तेषां निर्वृतिर्यस्मात्सवै नारायणः शिवः ॥ ९ ॥ नरायौ रामकृष्ण । स्तां । नराये ते स्वयं भुवि । णस्तदीयं सुखं यस्मात्सवै नारायणः शिवः ॥ १० ॥ नारं नरकपालं स्यात् तस्यायः प्राप्तिरुच्यते । सएव यंस्सणोभूषासवै नारायणः शिवः ॥ ११ ॥ नारो भवतिभूलोकस्तस्य यस्मिन्नयं स्थितिः । सशेषोयस्यणोभूषासवै नारायणः शिवः ॥ १२ ॥ आपोनराइतिव्यक्तं । ततोयस्याय उद्भवः । स चन्द्रो यस्यणोभूषासवै नारायणः शिवः ॥ १३ ॥

नाराविदोषा गंगास्याद्यस्तस्याः परिग्रहः । ततोणोनिर्वृति-र्यस्य । सवै नारायणः शिवः ॥ १४ ॥ अरोनिरग्निर्नारस्तु-स्यादविच्छिन्नवह्निभृत् । यस्यायणो यज्ञसौख्यं । सवै नारा-यणः शिवः ॥ १५ ॥ इःपुष्पधन्वा तस्याभूदणः खल्वसुखंयतः । अणन्तिरातिनोयश्च सवै नारायणः शिवः ॥ इत्योदिनायौगि-करूढ्या नारायणशब्दस्य सदाशिवे साधितत्वाच्च । इत्यलम-तिविस्तरेण प्रकृतमनुसरामः । एतेन नारायणशब्दस्यणत्व बाधाभावतया शिवे समन्वयसम्भवात्सहस्रशीर्षानुवाकस्य शि-वपरत्वं समंजसं सम्भवतीति राद्धान्तितं सहस्रशीर्षमिति ॥ सहस्रशब्दोत्र अनन्तवाचको भवति । सहस्रशीर्षं । सर्वानन-शिरोग्रीवइत्युक्तरीत्यानन्तशीर्षवानित्यर्थः । दिव्यतीतिदेवः । प्रकाशकः । दिविक्रीडादौ । तस्यभासा सर्वमिदं विभातीति श्रुत्युक्तरीत्या सर्वपदार्थप्रकाशक इत्यर्थः । विश्वाक्षं । अनन्ता-क्षं । विश्वशम्भुवं । विश्वस्य । विष्णवादिचेतनाचेतनप्रपञ्चस्य । शं सुखं यस्माद्भवतिसः । तथोक्तः । सर्वत्रवचनव्यत्ययश्छा-न्दसः । शिवएकोध्येयः शिवंकरस्सर्वमन्यत्परित्यज्येत्यथर्वशि-रोपनिषद्रीत्या शिवएवसर्वैस्सर्वविद्यासूपास्य इत्यर्थः । विश्वं नारायणं देवं । विश्वं । प्रपञ्चं । नारायणं । तच्छब्दवाच्यः । देवं । महादेवं । तदुपादानत्वेन तत्स्वरूपत्वं युक्तं भवति । अक्षरं । नाशरहितं । अतएव लोके शिवस्यैव मृत्युञ्जय इति-प्रसिद्धिः । परमं प्रभुं । विष्णवादि सर्वजीवनियामक इत्यर्थः । "ईश्वरः सर्वभूतानामितिश्रुतेः" । विश्वतः परमं । प्रपञ्चादुत्कृष्टः । अधिष्ठानत्वात्ततोधिक परिमाणवानित्यर्थः । नित्यं । त्रैकालि-काबाध्यरूप इत्यर्थः । "सत्यज्ञानमनन्तंब्रह्मेतिश्रुतेः" । हरिः । विष्णवादीन् हरतीति हरिः । शिवः । "सर्वभूतदमनायनम इति श्रुतेः" । विश्वं । प्रपञ्चं । विष्णवादिचेतनाचेतनप्रपञ्चमितिया-

वत् । नारायणँ । नारायणशब्दवाच्यः । हरिशब्दवाच्यशिव-एव नारायणशब्दवाच्य इत्यर्थः । नारायणँ । हरिं । विष्णुसंहारकशिवमिति वास्यात् । "हरिं हरंतमितिश्रुतेः" । यद्वा-अष्टमूर्त्यात्मकत्वेनशिवस्य । सर्वं शिवशरीरत्वेन । शरीरशरीरिणोरभेदाच्च । ब्रह्मविष्ण्वादिचेतनाचेतनप्रपञ्चं सर्वं शिव एवेतिभावः ॥ ननुकथं पुरुषशब्दवाच्यस्य शिवस्य विश्वात्मकत्वमित्याशङ्कायामाह । पुरुषएवेदँ सर्वं तद्विश्वमुपजीवति । इदँ । परिदृश्यमानं । सर्वं । अचेतनं । तत् । चेतनविष्ण्वादिकं । यतः । शिवात् । उपजीवति । रक्ष्यते । अतः सर्वं स एवेत्यर्थः । पूर्वं परशिवोपादानत्वेन । परशिवशरीरत्वेन विश्वतस्तादात्म्यमुक्तं । इदानींतुपरशिवपालकत्वेन तादात्म्यमुक्त-मतोनपुनरुक्तिरितिज्ञेयं पुरुषो वैरुद्रस्तन्महोनमोनम इत्यादिश्रुतिशतेषु शिवस्य पुरुषशब्दवाच्यत्वोपदेशादतो न शङ्कावकाशः। पतिंविश्वस्यात्मेश्वरँ शाश्वतं शिवमच्युतं । विश्वस्य । अचेतनप्रपञ्चस्य । पतिं प्रभुं । आत्मा । विष्ण्वादिजीवसमूहः । तस्य ईश्वरँ । अन्तर्यामितयास्थित्वा बुद्धिप्रेरको भवतीत्यर्थः । प्रभुवन्नियामकोवाभवतु । "य आत्मनितिष्ठन् इत्यादिश्रुतिषु"॥ ईश्वरः सर्वभूतानां हृद्देशेर्जुन तिष्ठतीत्यादिस्मृतिषु च तथा-श्रूयते । भीषास्माद्वातः पवतेत्यादिना परमेश्वराज्ञापालकत्वं च युक्तं भवति । शाश्वतं । नाशाप्रतियोगी । शिवं । शिव-शब्दवाच्यः । अच्युतं । अच्युतशरीरयुक्त इत्यर्थः। अत्रशाश्वताच्युतशब्दाभ्यां परमेश्वरमूर्तिद्वयस्यापि नित्यत्वं सूच्यते अतोन पौनरुक्तिः । स्थिरेभिरङ्गैः पुरुरूपउग्र इतिश्रुत्यन्तरे परमेश्वरसाकारस्यापि नित्यत्वोपदेशादितियावत् । स्वेच्छा-धीनविग्रहत्वात्तस्य परिणामित्वादिदोषप्रसङ्गो न प्रसज्यतेति राद्धान्तितः । तथाभाष्ये पण्डित भगवत्पादाराध्यैः "लोकवत्तुली-

लाकैवल्यमित्यधिकरणे" बहुधाराद्धान्तितोत्रसंक्षिप्तं । नारायणं महाज्ञेयं । नारायणं । नारायणशब्दवाच्यशिवः । महाज्ञेयं । महद्भिः शिवभक्ताग्रगण्यविष्ण्वादिभिः । ज्ञेयं । उपासनयाज्ञेय इत्यर्थः । विश्वात्मानं । परायणं । विष्ण्वादिचेतनाचेतनप्रपञ्चान्तर्यामितया प्रपञ्चात्मक इत्यर्थः । "तत्सृष्ट्वा तदेवानुप्राविशत्" । अनेन जीवेनात्मनानु प्रविश्य नामरूपे व्याकरवाणि । य आत्मनितिष्ठन्नित्यादि श्रुतिसत्वात् । सर्वान्तर्यामितया सर्वात्मकत्वं युक्तं । परं च तत् अयणं च । परायणं । विष्ण्वादीनामपि प्राप्यस्थानमित्यर्थः । नारायणपरंब्रह्म । नारायणशब्दवाच्यशिवएव वृहत्वादिधर्माश्रयब्रह्म ॥ तत्वं नारायणः परः। परः त्रिमूर्त्यतीतः । नारायणः । नारायणशब्दवाच्यः शिवः । तत्वं । सर्वव्यापकशिवतत्वं । एतेनद्वेवा ब्रह्मणोरूपेति वृहदारण्यक तृतीय ब्राह्मचतुर्थानुवाक श्रुत्युक्तरीत्या । परशिवस्य मूर्तिद्वयत्वमुक्तं भवति । नारायणपरंज्योतिः । नारायण शब्दवाच्यशिवः । ज्योतिः । हृत्पुण्डरीकावच्छिन्नाकाशभासमानज्योतिस्वरूपप्राणलिङ्गमित्यर्थः । आत्मानारायणः । परः नारायणः । तच्छब्दवाच्यशिवः । परः । त्रिमूर्त्यतीतः । आत्मा । शब्दवाच्यः । परमात्मेत्यर्थः । "प्रपंचोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यंते स आत्मा सविज्ञेयः इति माण्डूक्ये तथा श्रूयते ।" नारायणपरोध्याता । नारायण परः । नारायण शब्दवाच्यः । ध्याता । विष्ण्वादि महाभक्तैर्ध्यातुंयोग्य इत्यर्थः । ध्यानं नारायणः परः । ध्यानं । ध्यानगम्यं । नारायणः । नारायणशब्दवाच्य शिवः । परः । विष्ण्वादिभ्यो अधिकइत्यर्थः । "नतत्समश्चाप्यधिकश्च दृश्यतेतिश्रुतेः" । यच्चकिंचिज्जगत्यस्मिन्दृश्यते श्रूयते पिवा ॥ अस्मिन् जगति॥ यच्च किंचित् । यत्किंचित्। दृश्यते । श्रूयते । दृश्यमानं श्रूयमाणं वा यत्पदार्थं वर्तते ।

तत्सर्वं । अन्तर्बहिश्च । बाह्याभ्यान्तरेषु । व्याप्य । नारायणः स्थितः । नारायणशब्दवाच्यशिवःस्थितइत्यर्थः । आकाशवत्सर्वं गतश्चपूर्ण इति श्रुत्युक्तरीत्या सर्वाधिष्ठानतया सर्वान्तर्यामितयाच सर्वपदार्थबाह्याभ्यन्तरेषु व्याप्य तिष्ठतीति भावः । अनन्तमव्ययं कविं समुद्रेन्तं विश्वशम्भुवं । विश्वस्य । विष्ण्वादीनां शं सुखं यस्माद्भवति सः । विश्वशम्भुः । अत्रनारायण शब्दस्य शिवपरत्व सूचनार्थं नारायणशब्दोपसंहारे शिवैकान्तशम्भुशब्दो निर्दिष्ट इति रहस्यं ज्ञेयं । अनन्तं देशकृतपरिच्छेद शून्यइत्यर्थः । अव्ययं । कालकृतपरिच्छेदशून्य इत्यर्थः । कविं । नादस्वरूप इत्यर्थः । विश्वात्मतया वस्तुकृतपरिच्छेदशून्यत्वं बहुधा प्रपंचितं ॥—॥ समुद्रेन्तं । समुद्रे अन्तं । स्थितिर्यस्यासौ । समुद्रेन्तं । "यो देवोग्नौ योप्सु योविश्वं भुवना विवेश ।" इतिद्वितीयाध्याये । "सूक्ष्मातिसूक्ष्मं सलिलस्थमध्ये विश्वस्य स्रष्टारमनेकरूपं । विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तमत्यन्तमेतीतिश्वेताश्वतरचतुर्थाध्याये" परब्रह्मणः जलाधिवासत्वं स्पष्टमुक्तं । अन्तः समाप्तौ स्थाने च निर्णयेभ्यन्तरेपिचेति निघण्टुः । उत । समुद्रं । अन्ते । शरीरान्ते । यस्यासौ । समुद्रान्तः । रूपव्यत्ययश्छान्दसः । इति कैश्चिदुक्तं तथापि नास्माकं विरोधः । शिवस्याकाशाधिष्ठानत्ववत्समुद्राधिष्ठानत्वमपि समंजसमेव भवति । एवं शिवस्य नारायणादि शब्दवाच्यत्वं विश्वात्मकत्वादिमाहात्म्यमुपदिश्य । तदुपासनास्थानभूतहृदयपुण्डरीक तल्लक्षणतदधिष्ठानानिदर्शयति । पद्मकोशप्रतीकाशँ हृदयं चाप्यधोमुखमित्यादिना ॥ पद्मकोशप्रतीकाशँ । तामरसमुकुलतुल्यं । अधोमुखं ॥ अधोमुखतया विद्यमानं । अधोनिष्ट्याः निष्ठयाः । ग्रीवाबन्धनात् । अधः । अधोभागे । नाभ्यामुपरि । नाभेरुपरीत्यर्थः । यद्धृदयं तिष्ठति । तत् । दहरपुण्डरी-

कमित्युच्यते। अनाहतचक्रमेव। दहरपुण्डरीकमित्यर्थः। तत्कथं वर्ततेत्याकांक्षायामाह॥ ज्वालमालाकुलंभाति। तेजोरूपतया भासते। विश्वस्य। सर्वप्रपंचस्य। महत्। उत्कृष्टं। आयतनं। स्थानमित्यर्थः। योगिनां योगदृष्ट्या तत्रानन्तकोटिब्रह्माण्डानि दृश्यन्तेतिभावः। सततँ शिलाभिस्तु। लम्बत्याकोशसन्निभं। तत्। हृदयं आकोशसन्निभं। ईषद्विकसितपद्ममुकुलतुल्यं। सिराभिः। रलयोरभेदरीत्या। शिलाभिरित्यत्र सिराभिरिति-भावः। नाडीभिः। नाडीतुधमनी सिरेत्यमरकोशात्। सन्ततं। सदा। व्याप्तंसत्। लम्बति। नाडीभिर्व्याप्यस्थितमित्यर्थः। तस्यान्ते सुषिरँ सूक्ष्मं तस्य हृदयपुण्डरीकस्य। अन्ते। मध्य प्रदेशे। सूक्ष्मं सुषिरँ। सूक्ष्मरन्ध्रं वर्तते। तस्मिन्। हृदयपुण्डरी-कावच्छिन्नरन्ध्र। सर्वं प्रतिष्ठितं। शिवयोगिभिस्तत्रसर्वं दृश्य-तेतिभावः॥ तस्यमध्ये। महानग्निर्विश्वार्चिर्विश्वतोमुखः। तस्य। हृदयपुण्डरीकस्यमध्ये। मध्यभागे। विश्वतोर्चिः। विश्वतो अर्चींषियस्यासौ। तथोक्तः। विश्वतोज्वाल इत्यर्थः। विश्वतोमुखः। सर्वतोमुख इत्यर्थः महानग्निः। ज्योतिस्वरूप-त्वेन प्राणलिङ्गात्मकपरशिवः। वर्ततेत्यर्थः। सोग्रभुग्विभजं-तिष्ठन्नाहारमजरः कविः। सः। प्राणलिङ्गः। अजरः। स्वयं प्रकाशमानः सन्। कविः। नादरूपः। आहारं। अशितमन्ना-दिकं। अग्रभुक्सन्। प्रथमं प्राणाहुत्यात्मना भुन्जानः सन्। तिष्ठति। हृदयपुण्डरीकस्थितप्राणलिङ्गभुक्तसर्वपदार्थं स्वयं भक्षितः सन् ततः जाठराग्नेर्दास्यतिइतिभावः। सन्तता। सन्ततं। तस्यरश्मयः। प्राणलिङ्गकान्तयः। तिर्यगूर्ध्वमधः तिर्यगूर्ध्वाधोभागेषु। शायी। प्रकृष्टं संचरन्। स्वंदेहं। स्वकी-यस्थूलदेहं। आपादतलमस्तकं। पादादिशिरः पर्यन्तं। सन्ता-पयति। सम्यक्तापयति॥ देहगतोष्मा तदधीनत्वादितिभावः।

तस्यमध्ये । हृदयपुण्डरीकमध्ये । अणीयोर्ध्वा अणीयसोमनसः । ऊर्ध्वा । ऊर्ध्वभागे । वह्निशिखा तादृशःसन् व्यवस्थितः । मनोग्रेजीवस्तिष्ठतीत्यर्थः ॥ * ॥ * ॥ * ॥ * ॥

एवं सामान्यतोजीवस्वरूपमुक्त्वा । विशेषतया दर्शयति । नीलतोयदमध्यस्थेत्यादिना वा ॥ नीलतोयदमध्ये नीलतोयदतुल्यमूलप्रकृतिमध्येतिष्ठतीति नीलतोयदमध्यस्था । विद्युल्लेखा सौदामिनी रेखा । सैव । भास्वरा । प्रकाशमाना । नीवारशूकवत् । नीवारकण्टकवत् । शालिकणिशाग्रभागस्थितकण्टकवदित्यर्थः । तन्वी । सूक्ष्मा । पीता । गौरवर्णा अणूपमा । अतिसूक्ष्मरूपा । सती । भास्वती । भासते । तस्याः शिखाया-मध्ये । सर्वत्र लिङ्गव्यत्ययश्छान्दसः ॥ तस्याः तस्य जीवस्येत्यर्थः । शिखाया मध्ये । कलामध्ये । जीवकलामध्येत्यर्थः । परमात्मा । विष्ण्वादिजीवनियामकशिवः । व्यवस्थितः । सम्यग्भासतेत्यर्थः । एवं । जीवेश्वरस्वरूपनिरूपणं कृत्वा । जीवान्तस्थितमहेश्वरस्य नारायणादिसर्वरूपत्वं सर्वशब्दवाच्यत्वमुपपादयति । स ब्रह्मा स शिवस्सहरिस्सेन्द्र इत्यादिना ॥ ब्रह्मा । चतुर्मुखः । शिवः । कालरुद्रः । हरिः । आदिविष्णुः । इन्द्रः । देवेन्द्रः । अक्षरः । मृत्युञ्जयः । परमः । त्रिमूर्त्यतीतः । स्वराट् । विराडादयः । एतेन शिवस्य ब्रह्मणः । सर्वदेवतारूपत्वेन सर्व शब्दवाच्यत्वं तस्यैवसिध्यतीति राद्धान्तितं ॥ सर्वोवैरुद्रस्तस्मै रुद्राय नमोस्त्विति एतदुपसंहारेपितथैवराद्धान्तितत्वादत्रनकिंचिदपिवैकुठस्यावकाशः ॥ १ ॥ ..............केचित्तु..................रेवणासिद्धमरुलसिद्धैकोरामसिद्धपण्डिताराध्यादयः॥सहस्रशीर्षं देवमित्यादिपरशिवधर्माणां नारायणत्मकविष्णोः प्रतिपादनेपि। एतदनुवाकस्यशिवपरत्वे न किंचिदपिदोषः।"शिवस्यशक्तिर्विनियोगकाले चतुर्विधाभूच्छिवसत्प्रसादात्॥ भोगेभवानी पुरुषेषुविष्णुः

 

क्रोधे च काली समरे च दुर्गेतिसामश्रुतौ"। "प्रकृतिस्त्वं पुमान्रुद्र-स्त्वयि तद्वीर्यमाहृतं । त्वन्नाभिपङ्कजाज्जातः पञ्चवक्त्रः पितामहः इतिस्कान्दे"..........वासुदेवः पराप्रकृति गीतामामपि शिवस्य शक्तत्वेन । विष्णोः शक्तित्वेन स्पष्टमुपदिष्टत्वात् । "शक्तिशक्ति-मतोरभेदनियमात् । शक्तधर्माः शक्तौसम्भवन्तीतिन्यायात्" । 'शिवाय विष्णुरूपाय शिवरूपाय विष्णवेतिस्मृतौ'। 'नमोरुद्राय विष्णवे मृत्युर्मेपाहीति श्रुतौ' । शक्तशक्तित्वेन तयोरभेदव्यपदे-शाच्च । इति वदन्ति ॥........................अन्येउद्भटाराध्य-वेमनाराध्यविश्वाराध्यादयस्तु । अस्यामुपनिषदि दहरोपासना विषये । नारायणस्य उपासकत्वं । शिवस्योपास्यत्वनिर्णये सहस्रशीर्षानुवाकगतनारायणपरंब्रह्मतत्वं नारायणः परइत्यादि-वचनानि विरुध्येरन्नितिमाशङ्किष्ठाः वैदिकभ्रष्टपांचारात्रादयः । तद्भावभावनापन्नस्य नारायणस्यानितरसाधारणहृदयान्तर्वर्ति ज्योतिर्लिङ्गानुसन्धानसामर्थ्यलिङ्गेन । मुक्तः शिवसमोभवेदिति न्यायाच्च । तथास्ततिरितियोजितुं शक्यामित्यूचुः ॥ लोके-राजात्वमसीति मन्त्रिणंप्रत्युक्तमपि । यथा राजकल्पत्वं प्रतीयते । तद्वन्नारायणस्यापिशिवकल्पत्वं स्यादिति शाम्भवानन्दादय-ऊचुः । पुनः केचिन्नीलकंण्ठाचार्य भास्करभट्टाचार्यहरदत्ता-चार्यादयस्तु । सहस्रशीर्षत्वादिधर्मविशिष्टशिवः कीदृशः विश्वं । नारायणं देव इति ॥ विश्वं । जीवात्मकं । नारायणं । वासुदेवं । देवः । प्रकाशकः । यथा देवदत्तो मार्गं गच्छतीत्यादौ मार्गेगच्छतीत्यर्थो बोध्यते । तद्वदत्रापि । नारायणे प्रकाशमान इत्यर्थः सूच्यते त्यूचुः। बाणत्वंवृषभत्वमर्चकवपुर्भार्यात्वमार्यापतेः। क्षोणित्वं सखिता मृदङ्गवहता चेत्यादिरूपं दधावित्यादिषु शिवस्य । अन्तरङ्गभक्तत्वान्नारायणे विशेषतया प्रकाशत इति भावः । सूर्यकान्ते सूर्यकिरणवदितियावत् ॥ यद्वा । विश्वं ।

अचेतनप्रपंचं । नारायणं । नारायणशब्दोपलक्षितचेतनवर्गं । देवं । प्रकाशकः । अत्र समुच्चयबोधकचवर्णलोपश्छान्दस इतिज्ञेयं । नारायणँ हरिमित्यत्र ॥ नारायणं हरतीति नारायणंहरिः । अलुक्समासः । "हरिँहरन्तमिति श्रुतेः" ॥ नारसिंहाद्यवतारान् शरभसाळ्वादि रूपेण शिवः संहारं कृत इति भगवता बादरायणेन स्कान्देस्पष्टमुपदिष्टत्वाच्च । नारायणं महाज्ञेयमित्यत्र । नारायणं । विष्णु महाज्ञेयं । शिवतत्वोपदेशविशिष्टत्वान्महापुरुषत्वेनज्ञेयमित्यर्थः । तथासूतसंहितायामीश्वरगीतासु च भगवता बादरायणेन स्पष्टमुपदिष्टं । नारायण परं ब्रह्मेत्यत्र । नारायणात्परंयः शिवः वर्तते । स एव ब्रह्म । बृहत्वधर्माश्रयः । नतुनारायण इत्यर्थः । "परात्परतरं ब्रह्म तत्परात्परतो हरिः । यत्परात्परतोईशस्तन्मे मनः शिवसङ्कल्पमस्त्विति श्रुतेः" । स्कान्दे व्यासभुजस्तम्भनानन्तरं व्यासंप्रति विष्णुवचनं । "यज्ञकर्ता च देवेन्द्रो वेदकर्त्ता च वाक्पतिः । अहमेव जगत्कर्ता ममकर्ता महेश्वर इति पुराणवचनरूपविष्णूक्तेश्च" । तत्वं नारायणः परः नारायणात्परः । नारायणपरः । सन्धिव्यत्ययस्तु । अणीयोध्वेंत्यत्रेवच्छान्दसः । नारायणपरः । नारायणनियामकशिवः । तत्वं सर्वव्यापकतत्वमित्यर्थः । नारायणपरोज्योतिः । नारायणात्परः शिवः । ज्योतिः । सर्वप्रकाशक इत्यर्थः । नारायणः परः । नारायणाद्भिन्नः शिवः । अत्रापि सन्धिव्यत्ययश्छान्दसः । नारायणपरोध्याता । नारायणाद्भिन्नशिवएव । ध्याता । ध्यातुं योग्यः । ध्यानं नारायणः परः । अत्रापि सन्धिव्यत्ययश्छान्दसः । यथा एतदनुवाके सर्वत्र लिङ्गव्यत्ययश्छान्दसः । तथा सर्वत्र संधिव्यत्ययश्छान्दस इति ज्ञेयं । नारायणपरः । नारायणाद्भिन्नशिवएव । ध्यानं । ध्यानविषयो भवतीत्यर्थः । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्थितः ।

नारायणेस्थितः। नारायणस्थितः। लुक्समासः। सर्वं व्याप्य। नारायणस्य स्वान्तरङ्गभक्तत्वान्नारायणे विशेषतया स्थित इत्यर्थः। यद्वा। एकोविष्णुर्महद्भूतं पृथग्भूतान्यनेकश इति श्रुत्युक्तरीत्या नाराणस्य महाभूतत्वेन। तत्र विशेषतया वर्ततेतिवास्यात्॥ अन्यत्सर्वं पूर्ववदिति। उक्तप्रकारत्रयेणाप्येतदनुवाकस्य शिवपरत्वेन। उपक्रमोपसंहारविरोधाभावान्नास्माकंविरोधः॥ * ॥ * ॥ * ॥ * ॥

॥ * ॥ अत्रेदं विचार्यते ॥ * ॥

ननु। अम्भस्यपार इति। यमन्तः समुद्रे कवयो वयन्तीति वाक्यद्वयेन। अनन्यसाधारणसमुद्रशायित्वव्यपदेशात्। सर्वे निमेषा जज्ञिरे विद्युत इति वाक्येन। विद्युद्वर्णपुरुषात्सर्वोत्पत्तिव्यपदेशात्। पाद्मे। गिरिथज्ञानंतरमिन्द्रस्तवे। अग्रे। हिरण्यगर्भस्त्वं। भूतस्य समवर्तत॥ त्वमेवैकः पतिरसि। पुरुषस्त्वं हिरण्मय इति तस्यैव हिरण्मयरूपनिर्देशात्। अथर्वशिखोपदिष्टब्रह्मविष्णुरुद्रा इति वाक्यस्य मत्स्याद्यवतार विषयत्वात्। अजायमानो वहुधा विजायतेति श्रुत्युक्तरीत्या तस्य अजन्यत्वोपदेशात्। महोपनिषदिनारायणाद्ब्रह्माजायते। नारायणाद्रुद्रो जायतेत्यादिना तस्यैव सर्वकारणत्वव्यपदेशाच्चैतदनुवाकस्य विष्णुपरत्वमेवाभिहितमिति पूर्वः पक्षः। राद्धान्तस्तु। अम्भस्यपारे उदकस्यमध्येतिवाक्येन। प्रलयसाक्षित्वसर्वव्यापकत्वादिधर्माणां शिवस्यैव प्रतिपादनात्। तथा। यदातमस्थं न दिवानरात्रिर्नसन्नचासच्छिवएव केवलः। तस्मात्सर्वगतः शिव इति श्वेताश्वतरे प्रतिपादितं। समुद्रस्य वापीकूपतटाकाद्यपेक्षयाधिकजलाशयत्वादधिकत्वं। शिवस्याष्टमूर्तिमत्वात्। यत्र यत्र भूमिजलाग्निवाय्वाकाशदि-

नेन्द्रचन्द्रजीवानां स्थितिरुपपद्यत । तत्र तत्र शिवस्थितेः स्मृतिसिद्धत्वात् । "योरुद्रोग्नौ यो अप्सु य ओषधीषु यो विश्वा भुवनाविवेश तस्मै रुद्राय नमोस्त्वित्येदनुवाके" । "सूक्ष्मातिसूक्ष्मं सलिलस्यमध्ये विश्वस्यस्रष्टारमनेकरूपं । विश्वस्यचैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तमत्यन्तमेतीति । श्वेताश्वतरे" ॥ ॥ श्लोक ॥ "वडवानलरूपेण कालरुद्रो महेश्वरः । समुद्रे निवसन्नित्यं जलपानं करोति सः इति शैवपुराणे च ।" शिवस्य वडवानलरूपेणसमुद्रस्थित्युपदेशादम्भस्यपार इति वाक्यद्वयस्य शिवपरत्वमेव सिद्धं ॥ नमो हिरण्यवाहवेसेनान्ये दिशां च पतयेनमो नम इति शतरुद्रीये । नमोहिरण्यवाहवे हिरण्यवर्णाय । हिरण्यरूपायाम्बिकापतय उमापतय पशुपतये नमो नम इत्युत्तरत्रच शिवस्य हिरण्मयवर्णत्वव्यपदेशादुमापतित्व पशुपतित्वधर्माणामन्यपरत्वायोगात् । श्रुतिस्मृतिविरोधेतु श्रुतिरेव बलीयसी ॥ "श्रुतिश्रुत्योर्विरोधेतु विशेषं ग्राहयेद्बुध इति वैदिकमीमांसानियमाद्धूर्तवैष्णवकल्पिततापनीयोपनिषत्पद्मपुराणादिवचनानां कैश्चिद्वैदिकमहद्भिर्यत्राप्यनुट्टङ्कितत्वेनाप्रामाण्यात् । भट्टभास्करविद्यारण्यादिमहद्भिः नमो हिरण्यवाहवेत्यादि मन्त्राणां शिवपरत्वेन व्याख्यातत्वाच्च । सर्वे निमेषा जज्ञिरे विद्युत इति वाक्यविहितविद्युद्वर्णविशिष्टत्वं शिवस्यैव राद्धान्तितं । किंच । "विष्णुरिद्धापरमस्य विद्वान्जातो बृहन्नभिपाति तृतीयमिति ऋग्वेदे" । अस्यार्थः ॥ परमस्य । मूर्तित्रयातीतशिवस्य । विद्वान्वेत्ता । शिवज्ञानवेत्तेत्यर्थः ॥ बृहद्विष्णुरादिविष्णुः । जातः । परशिवेनोत्पादितः सन् तृतीयं । कैलासं । अभिपाति । रक्षतीति आदिविष्णोरेव शिवजन्यत्वं स्पष्टमुक्तं । बृहच्छन्देनात्रादिविष्णुरेवनिर्णीयते । "नमो विष्णवे बृहते करोमि । बृहत्ते

विष्णो सुमतिं भजामहेत्यादिश्रुतिषु" तथा श्रूयमाणत्वात् । अजातपरशिवादेवमुपस्थितं परित्यज्य । अनुपस्थितापरजन्यत्वकल्पने मानाभावात् । "ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्त-इत्यथर्वशिखायां" "सोमः पवतेजनिता मतीनां जनिता दिवो जनितेन्द्रश्चाग्निश्चजनितोथविष्णोरिति श्रुत्यन्तरे च" तथा श्रवणाच्चादिविष्णोः शिवजन्यत्वमनिवार्यं ॥ ......... ॥ "अजात इत्येवं कश्चिद्भीरुः प्रपद्यते रुद्यत्ते दक्षिणं मुखं तेन मां पाहि-नित्यमितिश्वेताश्वतरे" महारुद्रस्याजन्यत्वव्यवस्थापनात् । तत्रैव । पुरुषसूक्तस्य । सहस्रशीर्षा पुरुष इत्यारभ्य ॥ ........॥ सर्वाननशिरोग्रीवः । तस्मात्सर्वगतः शिव इत्युपसंहारवाक्येन शिवपरत्वनिर्देशात् । तन्मध्यगता जायमानो बहुधाविजायतेति वाक्योपदिष्टाजातत्वमपि शिवपरमेवेतिनिश्चीयते । नारायणाद्रुद्रोजायतेतिवाक्यमवान्तरसृष्टिविषयककालरुद्रपरत्वं । तथोक्तमनुशासनिके । "सोसृजद्दक्षिणादंगाद्ब्रह्माणं लोकसम्भवं । वामपार्श्वात्तथा विष्णुं । लोकरक्षार्थमीश्वरः । हृदयात्कालरुद्राख्यमित्यपद्देशात्" । शैववायवीयसंहितायां । "त्रयस्तेकारणात्मानो जाताः साक्षान्महेश्वरात् । चराचरस्य विश्वस्य सर्गस्थित्यन्तहेतवः । पित्रानियमिताः पूर्वं त्रयोपि त्रिषुकर्मसु । ब्रह्मासर्गे हरिस्त्राणे रुद्रः संहरणे पुनः ॥ तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः । तपसा तोषयित्वा तं पितरं चन्द्रशेखरं । ब्रह्मनाराणौपूर्वं रुद्रः कल्पान्तरेसृजत् । कल्पान्तरेपुनर्ब्रह्मा । ब्रह्माणं च पुनर्भवः । विष्णुश्च भगवान्तद्वद्ब्रह्माणमसृजत्पुनरित्यादिना तथास्पष्टमुपदिष्टत्वात्कालरुद्रपरत्वमेवेतिनिश्चीयते ॥

किंच । शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः । ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रास्ते संप्रसूयन्ते । स ब्रह्मा सशिवस्सहरिः सोक्षरः परमः स्वराट् स एव-

विष्णुः सप्राणः सकालोग्निः स चन्द्रमा इत्यादिना नारायणाथर्वशिखामाण्डूक्यकैवल्याद्युपनिषत्सु । मूर्तित्रयकारणत्वमूर्तित्रयातीत्वोपास्यत्वादिधर्माणां शिवस्यैव प्रतिपादनात् । नारायणोपनिषदि । नारायणाद्ब्रह्मा जायतेतिवत् नारायणान्नारायणोजायत इतिवाक्यादर्शनेन नारायणस्य मूर्तित्रयकारणत्वासम्भवाच्च ॥ परशिवस्यैवोपपन्नं । नतुनारायणस्य अतएतदनुवाकस्य शिवपरत्वमिति ॥.................................

... ॥ * ॥ राद्धान्तः ॥ अत्रसारभूयिष्ठकासारप्रविष्ट ॥ * ॥ लुलायन्यायमनुसृत्यविष्णोः परब्रह्मत्वभङ्गभीत्या च केचिद्धूर्तवैष्णवाः । निधनपतयेनम इत्यनुवाकं चौर्यं कृत्वा हिरण्यपतयेत्यादिमन्त्रो व्यत्यस्तमपि बहुधा कुर्वन्ति । अपौरुषेयवेदमन्त्राणामेवं व्यत्यस्तकारिणां किमुत पौरुषेयवचनानामितिमहदाश्चर्यं भवति ॥ वैदिकानां ॥ किंच ॥ स ब्रह्मासशिवस्सहरिस्सोक्षर इतिमन्त्रे । गणव्यत्ययदोषमापाद्य विष्णुब्रह्मरुद्रादिसर्वातिरिक्तशिवस्य परब्रह्मत्वप्रतिपादनमपि नाङ्गीकुर्वन्ति । गणव्यत्यये । इन्द्रपदत्यागेपि । सब्रह्मासशिवस्सहरिः सोक्षरः परमः स्वराडिति समीचीनंभवति । तथाकिमिति नाङ्गीचक्रुः । तर्हि । "नीलः पतङ्गो हरितो लोहिताक्षस्तटिद्गौरऋतवः समुद्राः यस्मिन्युता ब्रह्मर्षयो देवताश्चेत्यादि बहुश्रुतिषु" ॥ गणव्यत्ययवर्णव्यत्ययलिङ्गव्यत्ययविभक्तिव्यत्ययवचनव्यत्ययपुरुषव्यत्ययानि बहूनिसन्ति । तेषामपि स्वेच्छानुकूलतया सवरणताप्रसङ्गः । तथाचेदीश्वराधिकस्त्वमसीत्यहो मूलच्छेदो त्वत्पाण्डित्यप्रकर्ष इतिसन्तुष्टावः ॥ किंच । अतएव । श्लो० । वेदसिद्धं महादेवं साम्बं चन्द्रार्धशेखरं । लिङ्गं दिनेदिनेदेवं शिवरुद्रादिसंज्ञिकं । नार्चयिष्यन्ति मोहेन पाषण्डोपहताजनाः । शंखचक्रगदापद्माद्यंकनं विग्रहे स्वके । मोहाच्चैव करिष्यन्ति

पाषण्डोपहताजनाः । शंखचक्रांकितं विप्रं वैष्णवं शिवदूषकं पश्येद्यस्तु प्रमादाद्वा सचैलस्नानमाचरे दित्यादिना' सूतसंहिता शंकरसंहितादिषु भगवता व्यासेन । 'रुद्रपिण्डसमुद्भूता' । रुद्रभूमौल्यंगताः । पितरं नाभिजानन्ति तातंवेश्यासुतोयथा । वेदास्तु द्राविडीगाथा । ऋषयस्तुन्दलादयः । शिवनिन्दा हरेर्भक्तिराचारः पाकचातुरी ॥ रुद्रः स्वीष्टकृदग्निरित्यनुदिनं मुंचति होमक्रियाम् । नेच्छन्ते पशुबन्धनस्य च विधिं रुद्रः पशूनांपतिः ॥ श्रीरुद्रप्रतिपादिकां भगवतींतां भर्गशब्दान्वितां ॥...... ... गायत्रीमपिसंत्यजन्तिसततं विप्राः कथं वैष्णवाः ॥ संचारिते शिवमतेप्पयदीक्षितेन दोर्मूलदाहकमतं नितरांनिरस्तं । श्रुङ्गित्वमद्रिषुवृषेषु च तप्तमुद्रा । हारिद्रचूर्णमबलाकुचमण्डलेषु ॥ कुण्डकं गोलकं चैव लिङ्गधारणवर्जितं । तथादेवलकं दृष्ट्वा सचैलंस्नानमाचरेदित्यादिवचनसहस्रैः पण्डितारध्योद्भटाराध्यवेमनाराध्यभवनीशंकराराध्यनन्दिकेश्वराराध्य सोमाराध्याप्पयदीक्षितहरदत्ताचार्यादि शैववरैर्वैष्णवमतं तान्त्रिकमिति सहस्रशः राद्धान्तितं ॥ इत्यलमनया प्रसक्त्यानुप्रसक्त्या ॥ * ॥

इत्येकादशानुवाकभाष्यं समाप्तम् ॥

मूलम्—आदित्यो वा एष एतन्मण्डलं तपति तत्र तारुचस्तदृचा मण्डलँ सरुचां लोकोथय एतस्मिन्मण्डलेर्चिर्दीप्यते । तानि सामानि तत्साम्नां मण्डलं स साम्नां लोकोथयएष एतस्मिन्मण्डलेर्चिषि पुरुषस्तानि यजूँषि सयजुषां मण्डलं सयजुषां लोकस्यैषा त्रय्ये-

वविद्या तपति य एषोन्तरादित्ये हिरण्मयः पुरुषः ॥

इति द्वादशानुवाकः ॥ १२ ॥

भाष्यम्—एवं दहरोपासनमुपदिश्य । सूर्यमण्डलान्तर्वर्तित्वेन शिवोपासनमुपदिशति ॥ आदित्योवा एष इत्यादिना ॥ प्रत्यक्षदृष्टादित्यमण्डलतद्गतार्चिस्तद्गतपुरुषाणां ऋक्सामयजुरूपत्वं तन्मण्डलत्वं तल्लोकत्वं च । अतश्च एतत्त्रयरूपतयात्रय्येव विद्या तपतीत्यर्थः । एवं त्रयीमण्डलरूपे आदित्ये हिरण्मयरूपविशिष्टतया योगिभिर्दृश्यमानपुरुषशब्दवाच्यशिवः उपासितव्य इत्यर्थः । अत्रवक्तव्यं सर्वं आनन्दवल्यामष्टमानुवाके बहुधा प्रपंचितं तस्मादत्र पुनर्नोक्तम् ॥ इति द्वादशानुवाकभाष्यम् ॥ १२ ॥

मूलम्—आदित्योवैतेज ओजोबलं यशश्चक्षुः श्रोत्रमात्माभन्यो मन्युर्मनुर्मृत्युस्सत्यो मित्रो वायुराकाशः । प्राणो लोकपालः कः किं कंतत्सत्यमन्नमायुरमृतो जीवो विश्वः कतमः स्वयम्भूः प्रजापतिः संवत्सर इति । संवत्सरोसावादित्यो य एषपुरुष एषभूतानामधिपतिर्ब्रह्मणः सायुज्यँ सलोकतामाप्नोत्येतासामेवदेवतानां सायुज्यं सार्ष्टिंतां समालोकतामाप्नोतिय एवं वेद इत्युपनिषत् ॥

॥ इति त्रयोदशानुवाकः ॥

भाष्यम्—आदित्योवैतेज इत्यादि ॥ तेजः । प्रतापः । ओजः । कान्तिः । सत्सुसाधुः सत्यः । सत्यं । निर्विकारं । आदित्यस्यैव तेज आध्यात्मिकत्वं । कः किं कं कतमइति पृच्छ्यमानसर्ववस्तुरूपत्वमपि तस्यैवेत्यर्थः । इतिशब्दः प्रकारवचनः । एवं जातीयकत्वमपि तस्यैवेत्यर्थः । संवत्सरोसावादित्यादि । आदित्ये यः पुरुषः । स एव । सम्यग्वसन्ति सर्वभूतान्यस्मिन्निति संवत्सरः । इदं संवत्सरत्वोपपादनमुपलक्षणं। पूर्वनिर्दिष्टतेजस्त्वादिगुणानामपि । सायुज्यं । युज्यत इतियुक् । गुणः । सायुज्यं । समानगुणत्वं । नदीसमुद्रवदैक्यं वा । सार्ष्णितां । समानभोगत्वं मुक्तः शिवसमोभवेदितिन्यायादित्यर्थः । एतासां प्रसिद्धानां देवतानां ॥ * ॥ वायुर्लोकपाल इति पूर्वनिर्दिष्टानां वासार्ष्णित्वसालोक्ये प्राप्नोतीत्यर्थः ॥ यस्तु सूर्यमण्डलान्तर्वर्तित्वेन शिवोपासनं करोति । स सर्वभोगतृप्तिमिहपरत्रलब्ध्वा ततश्चतुर्विधमुक्तिं क्रमशो लभतेति भावः ॥

इति नारायणे त्रयोदशानुवाकभाष्यं समाप्तम् ॥ १३ ॥

मूलम्—निधनपतयेनमः निधनपतान्तिकायनमः॥ १॥
ऊर्ध्वायनमः । ऊर्ध्वलिङ्गायनमः ॥ २ ॥
हिरण्यायनमः । हिरण्यलिङ्गायनमः ॥ ३ ॥
सुवर्णायनमः । सुवर्णलिङ्गायनमः ॥ ४ ॥
दिव्यायनमः । दिव्यलिङ्गायनमः ॥ ५ ॥
भवायनमः । भवलिङ्गायनमः ॥ ६ ॥
शर्वायनमः । शर्वलिङ्गायनमः ॥ ७ ॥
शिवायनमः । शिवलिङ्गायनमः ॥ ८ ॥

ज्वलायनमः । ज्वललिङ्गायनमः ॥ ९ ॥
आत्मायनमः । आत्मलिङ्गायनमः ॥ १० ॥
परमायनमः । परमलिङ्गायनमः ॥ ११ ॥
एतत्सोमस्य सूर्यस्य सर्वलिङ्गँ स्थापयति पाणिमन्त्रं पवित्रं ॥

इति चतुर्दशानुवाकः ॥

भाष्यम्—"सूर्यो मुख्यशरीरं स्याच्छिवस्य परमात्मनः । आदित्य हृदये शिव इत्यादिस्कान्दवचनरीत्या" ब्रह्माण्डे सूर्यमण्डलान्तर्वर्तित्वेन शिवस्योपासनमुक्त्वेदानीं स्वशरीरे परमेश्वरध्यानधारणोपासनान्युपदिशति । निधनपतये नम इत्यादिना ॥ निधनपतये नमः । निधनं सर्वभूतलयात्मकप्रलयं । तस्य । पतिः । प्रभुः । सर्वसंहारकर्तेत्यर्थः । एतेन महाप्रलयसाक्षित्वं शिवस्योपदिशति ॥ "यदातमस्थं नदिवा नरात्रिर्न सन्न चाक्षच्छिव एव केवल । इति । श्वेताश्वतरे तथा श्रूयते" । निधनपतान्तिकायनमः । निधनस्य । मरणस्य । पतिः । प्रभुः । कर्तेत्यर्थः । यमः । तस्य अन्तकः । संहर्ताशिवः । तस्मैनमः । तं नमस्करोमीति भावः । यमस्यापिसंहारकर्तृत्व दर्शनात्ततोऽधिकत्वं शिवस्य किमायातमिति शङ्कानिरासार्थमुत्तरवाक्यमुक्तं । 'यस्य ब्रह्म च क्षत्रं चोभेभवति । ओदनं । अत्ता चराचरग्रहणादित्यादि श्रुतिसूत्रेषु" संहारकर्तृत्वस्य पर ब्रह्मधर्मोपदेशात्सर्वसंहारकशिवएव परं ब्रह्मेति निश्चीयते ॥ एतत्स्थितेरप्युपलक्षणतया जगज्जननादिकारणभूतनिष्कल परशिवतत्वमेतद्वाक्येनोपदिश्यते ॥ १ ॥ ऊर्ध्वायनम इत्यनेन महदादिसर्वतत्वोर्ध्वगतशुद्धसत्वप्रधानमायाशक्तिरुच्यते ।

सैवचिच्छक्तिरित्यभिहितं ऊर्ध्वलिङ्गायनम इत्यनेन। चिच्छक्त्यवच्छिन्नसदाशिवतत्वमुपदिश्यते ॥२॥ हिरण्यायनम इत्यनेन। पश्चिमचक्रं। तत्रस्थितगुणत्रयसमष्ट्यात्मकमहातमोरूपाविद्याशक्तिरुच्यते। हिरण्यलिङ्गायनम इत्यनेन। तदवच्छिन्न स्वयंप्रकाशमानभावलिङ्गमभिधीयते ॥ ३ ॥ सुवर्णायनम इत्यनेन। शिखाचक्रं। तत्रस्थितमलिनसत्वात्मकशक्तिरुच्यते। सुवर्णलिङ्गायनमं इत्येनन। तदवच्छिन्नचित्कलात्मकप्राणलिङ्गं निर्णीयते ॥ ४ ॥ दिव्यायनम इत्यनेन। सहस्रारं। तत्रस्थगुणत्रयप्राचुर्यात्मकमहाशक्तिश्च बोध्यते। दिव्यलिङ्गायनम इत्यनेन। तदवच्छिन्नस्वप्रकाशमानस्वेष्टलिङ्गमुपदिश्यते ॥ ५ ॥ भवायनम इत्यनेन। आज्ञेयचक्रं। तत्रस्थशुद्धान्तः करणं च बोध्यते। भवलिङ्गायनमः इत्यनेन। तदवच्छिन्नमहालिङ्गं श्रूयते ॥ ६ ॥ शर्वायनम इत्यनेन। विशुद्धचक्रं। तत्रस्थितव्योमतत्वानुगत पराशक्तिश्च बोध्यते। शर्वलिङ्गायनम इत्यनेन। तदवच्छिन्न प्रसादलिङ्गं निरूप्यते ॥ ७ ॥ शिवायनम इत्यनेन। अनाहतचक्रं। तत्रस्थपवनतत्वात्मकादिशक्तिश्च निरूप्यते। शिवलिङ्गायनम इत्यनेन। तदवच्छिन्नचरलिङ्गमुच्यते ॥ ८ ॥ ज्वलायनम इत्यनेन। मणिपूरचक्रं। तत्रस्थतेजस्तत्वात्मकेच्छाशक्तिश्च बोध्यते। ज्वललिङ्गायनम इत्यनेन। तदवच्छिन्न शिवलिङ्गमुपदिश्यते ॥ ९ ॥ आत्मायनम इत्यनेन। स्वाधिष्ठानचक्रं। तत्रस्थितजलतत्वात्मकज्ञानशक्तिश्च बोध्यते। आत्मलिङ्गायनम इत्यनेन। तदवच्छिन्नगुरुलिङ्गमुपदिश्यते ॥१॥ परमाय नम इत्यनेन। आधारचक्रं। तत्रस्थक्षित्यात्मकक्रियाशक्तिश्च बोध्यते। परमलिङ्गायनम इत्येन। तदवच्छिन्नाचारलिङ्गमुपदिश्यते ॥ ११ ॥ एतत्सोमस्य सूर्यस्य सर्वलिङ्गँ स्थापयतीत्यनेन। एतद्दशविधलिङ्गात्मकसूर्यस्य सूर्य-

मण्डलान्तर्वर्तिनः सोमस्य । उमाशक्तिविशिष्टस्यशिवस्य लिङ्गं लिङ्गरूपशरीरं । सर्वं सर्वेत्यर्थः । रूपव्यत्ययश्छान्दसः ॥ स्थापयति । धारयन्तीत्यर्थः । एतन्मन्त्रस्य भगवताशिवेन । सिद्धान्तागमे ॥ "प्रलयं निधनं ख्यातं । सर्वभूतलयात्मकं तत्कर्तृत्वं महेशस्य सत्वात्तत्पतिरीश्वरः ॥ तस्मै नमो महेशायतमस्साक्षिस्वरूपिणे ॥ निधनाधिपतिः कालः सर्वसंहारकारणात् ॥ तस्यान्तकत्वं हर्तृत्वं शिवस्यैव निरूप्यतेत्यारभ्य ॥... एतत्सूर्यस्य मित्रस्य मण्डलान्तरवर्तिनः । सोमस्य पार्वतीशस्य । लिङ्गं भवभयापहं । सर्वेषु भक्तदेहेषु । स्थापयेद्गुरुणासदा । पवित्राणां पवित्रत्वात्पवित्रमिति कथ्यते ॥ तस्माद्धार्यं सदालिङ्गं पाणिमन्त्रेतिमन्त्रतः ॥ पाणौलिङ्गं समासाद्य दीक्षाकाले गुरुः शिवं । येन स्मरति तन्मन्त्रं पाणिमन्त्रं वदन्तिहि ॥ मननात्पूजनाद्भक्तान् त्रायतीतिनिरुक्तितः ॥ पाणिमन्त्रमितिप्रोक्तं । तल्लिङ्गं ब्रह्मशाश्वतमित्यादिना व्याख्यानं कृतं । किंच । लिङ्गपुराणेभगवता व्यासेनापि । "वेदेषु शास्त्रसन्धेषु । पुराणेष्वागमेषु च ब्राह्मणस्यसमाख्यातं । ........ लिङ्गधारणमुत्तममित्युपक्रम्य । यजुरप्याह सर्वंवै लिङ्गं स्थापयतीति च । तस्माद्धार्यं महालिङ्गं पाणिमन्त्रेतिमन्त्रतः । पाणौलिङ्गं विनिक्षिप्य दीक्षाकाले गुरुः शिवं ॥ येनस्मरति तन्मन्त्रं पाणिमन्त्रंवदन्तिहि ॥ पवित्रत्वान्महेशस्य शिवस्य प्रतिपादनात् ॥ पवित्रीकरणात्पुंसां पवित्रमिति कथ्यते । अतः सर्वेषु कालेषु । धारयेल्लिङ्गमुत्तमं । गच्छन् तिष्ठन् स्वपन् जाग्रदुन्मिषन्निमिषन्नपि । शुचिर्वाप्यशुचिर्वापि लिङ्गं सर्वत्र धारयेत् ॥ लिङ्गधारीसदाशुद्धो निजलिङ्गं मनोहरं । अर्चयेन् गन्धपुष्पाद्यैः करपीठे समाहितः । नित्यानि कर्मवृन्दानि तथानैमित्तिकानि च । कुर्याल्लिङ्गाङ्गसम्बन्धी द्विजन्मा कामवर्जितः । इत्यादिना ।

एतदनुवाकगतसर्वलिङ्गवाक्यस्य बाह्येष्टलिङ्गधारणपरत्वेन बहुधाराद्धान्तितं। श्रीकरभाष्ये पण्डितभाष्यकारैरपि सर्वत्र-प्रसिद्धोपदेशाधिकरणे बहुधाराद्धान्तितमतोऽत्र संक्षिप्तं मया॥ भवानीशंकराराध्य नन्दिकेश्वराध्य परमतकालानलाराध्यवज्रन-खाराध्यादिवीरशैवपूर्वाचार्यैर्विपक्षपूर्वपक्षदुर्नीरीक्षणत्वेन बाह्य लिङ्गधारणंश्रुतिस्मृतिपुराणागमेतिहासादिभिर्बहुधासिद्धान्तितं॥ इतिनारायणे चतुर्दशावाकभाष्यं समाप्तम्॥

मूलम्--सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवे भवेनाति भवे भवस्व मां भवो-द्भवायनमः॥ १९॥

पंचदशानुवाकः॥

भाष्यम्-पूर्वानुवाके॥ निधनपतये नम इत्यारभ्य लिङ्ग-रूपस्य शिवस्य। सर्वात्मकत्वं सर्वत्रोपास्यत्वं। सर्व भक्तदेह धारणत्वंचोपदिश्य। इदानीं तत्स्तुतिं नमस्कार पूर्वकत्वेनार-भते॥ सद्योजातमित्यादिना॥ सद्योजातं॥ "सद्योजातं क्षितिः प्रोक्ता। वामदेवस्तथाजलमितिकामिकागमोक्तरीत्या" पृथ्व्यात्म-कमृच्छिलादिनिर्मितशिवलिङ्गं। प्रपद्यामि। पूजाधारणादिना प्राप्नुवामीत्यर्थः। सद्योजाताय॥ साधनान्तरनिरपेक्षतया-भक्तप्रार्थनाकालाविर्भूताय। नमो नमः। अत्रवैशब्देनानन्य-शरणत्वं सूच्यते। तथाशिवएकोध्येयः शिवंकर इत्यथर्वशिरसि श्रूयते। नमोनम इति नमःपदपुनरावृत्तिः शिवस्य सर्वदेवतातिशयत्वं सूच्यते। एवं शिवमन्त्रेषु सर्वत्र ज्ञेयं॥ भवे भवे। प्रति जन्मनिअतिभवे। भवध्यानधारणपूजादिविहीन पांचरात्रादि दुष्टजन्मनि॥ नभवस्वमां नजनयस्वेत्यर्थः। महापाशुपतमते

जनयस्व । इति भक्त प्रार्थनामन्त्रमिदं ॥ भवस्य । विष्ण्वादि सर्वकार्यवर्गस्य ॥ उद्भवः । जन्म । यस्माद्भवति । तस्मै । जगज्जन्मादिलक्षणविशिष्टशिवायेत्यर्थः ॥

इति पंचदशानुवाकभाष्यंसमाप्तम् ॥ १५ ॥

जातस्यजायमानस्य गर्भस्थस्यापि देहिनः। माभून्ममकुले जन्म यस्य शम्भुर्नदैवतमितिस्कान्दे व्यासवचनं ॥ इत्यादीन्यत्रानुसन्धेयानि ॥ इति पंचदशानुवाकभषयं समाप्तम् ॥ १५ ॥

मूलम्—वामदेवायनमो ज्येष्ठायनमः श्रेष्ठायनमो रुद्रायनमः कालायनमः कलविकरणायनमो बलविकरणायनमो बलायनमो बलप्रमथनाय नमः सर्वभूतदमनायनमो मनोन्मनाय नमः ॥ १६ ॥

इति षोडशोनुवाकः समाप्तः ।

भाष्यम्—वामदेवायनम इति वामदेवाय। लीलामंगलविग्रहाय। नमः। ज्येष्ठायनमः। ब्रह्मविष्ण्वादिजनकत्वेन महाप्रलयसाक्षित्वेन वा शिवस्य ज्येष्ठत्वंयुक्तं । श्रेष्ठायनमः। मृत्युञ्जयत्वेन । शिवस्यब्रह्मविष्ण्वादिभ्यः श्रेष्ठत्वम् । * *

* रुद्रायनमः। महाप्रलेये ब्रह्मविष्ण्वादीन् रोदयति । द्रावयतितिरुद्रः । कालायनमः ।। जीवकर्मानुगुण्येन तत्तत्कालेषु फलप्रदत्वात्तस्य कालात्मकत्वं । कलाकाष्ठादिविकरणहेतुत्वक्तलविकरणत्वं कलँकरण इति ह्रस्वश्छान्दसः । बलविकरणायनमः। विगतानिकरणानियस्यासौ विकरणः बलश्चासौविकरणश्चतथोक्तः। शरीरेन्द्रियनिरपेक्षतया सर्वकारणसामर्थ्यवानित्यर्थः। "अपाणिपादोहमचिन्त्यशक्तिरिति श्रुतेः" बलाय-

नमः । ब्रह्मविष्ण्वादीनां दुर्जयइत्यर्थः । बलप्रमथनायनमः । मत्स्यकूर्मवराहनारसिंहवामनावतारसंहारकर्तेत्यर्थः ॥ सर्व-भूतदमनायनमः । महाप्रलयकर्तेत्यर्थः मनोन्मनायनमः । बुद्धि-प्रेरकाय नमः ॥ "सनोदेवः शुभया स्मृत्या संयुनक्त्विति-श्रुतेः" ॥१६॥ इति षोडशानुवाकभाष्यं समाप्तम् ॥

मूलम्—अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यःसर्वेभ्यः
सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥१७॥

इति सप्तदशानुवाकः समाप्तः ॥ १७ ॥

भाष्यम्—अघोरेभ्य इति ॥ भक्ताभीष्टफलप्रदानानुकूलरू-पत्वादघोरत्वं दुष्टनिग्रहरूपत्वेन निग्रहत्वं । मृत्युकालादीनां संहारकत्वेन घोरघोरत्वं तादृग्भ्यः । सर्वेभ्यः । चेतनाचेत-नात्मकाष्टमूर्तिभ्यः । सर्वशर्वेभ्यः । पशुपतित्वचन्द्रशेखरत्वादि पंचविंशतिलीलाविग्रहेभ्यः । रुद्रेभ्यः । शिवेभ्यः । ते । तेभ्यः । वचनव्यत्ययश्छान्दसः ॥ नमः । अस्तु । नमस्करोमीति भावः ॥ इति सप्तदशानुवाकभाष्यंसमाप्तम् ॥

मूलम्—तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो-
रुद्रः प्रचोदयात् ॥ १८ ॥

इति नारायणे अष्टादशानुवाकः ॥

भाष्यम्—तत्पुरुषाय विद्महेति ॥ महादेवाय सर्वदेवताधि-काय । तत्पुरुषाय । तत्संज्ञिकमुखाय शिवाय । शिवमित्यर्थः । विद्महे । उपास्महे । धीमहि । ध्यायेम । इति बाह्याभ्यन्तरो-पासनमुक्तं । तत् । उपासनं । रुद्रः । शिवः प्रचोदयात् । निर्व-र्तयत्वित्यर्थः ॥ इत्यष्टादशानुवाकभाष्यं समाप्तम् ॥

मूलम्—ईशानः सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ २९ ॥

॥ एकोनविंशत्यनुवाकः ॥

भाष्यम्--ईशान इति ॥ सर्वविद्यानां । निगमागमस्मृति पुराणादीनां ॥ ईशानः । नियामकः । एतेन । सर्वविद्याकर्तृत्वं शिवस्योपदिष्टं । "यो ब्राह्मणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै इतिश्रुतौ" वर्तमानचकारस्यानुक्तसमुच्चायकार्थत्वच्छेदेतरसर्वशास्त्राणि चतुर्मुखाय दत्तवानित्यर्थः सूच्यते । ईश्वरः सर्वभूतानां ॥ एकोविष्णुर्महद्भूतं पृथग्भूतान्यनेकशः इति भारतवचनेन विष्णोरपि भूतत्वव्यपदेशात् । विष्ण्वादिसर्वजीवानां । प्रभुरित्यर्थः । ब्रह्माधिपतिः । ब्राह्मणानामधिपतिरित्यर्थः ॥ 'ब्रह्माविप्रः प्रजापतिरिति नानार्थरत्नमालायां' । 'त्वं देवानां ब्राह्मणानामधिपतिर्विष्णुः क्षत्रियाणामधिपतिरितिसामश्रुतौ' । "ब्राह्मणानां शिवोदेवः क्षत्रियाणान्तु माधवः । इत्यादिना मनुस्मृतौ तथा श्रूयते" ॥ ब्रह्मणः । चतुर्मुखस्य । अधिपतिः । प्रभुः । इदं नवब्रह्मणामप्युपलक्षणं । ब्रह्म । ब्रह्मपदवाच्यः । शिवः । मे । मम अस्तु । स कीदृशः । ॐ । ओङ्कार वाच्यः । सदाशिवः । महाकैलासनिवासलीलामङ्गलविग्रहः । एतेन शिवस्य । चिच्छक्त्यवच्छिन्नत्वं । सदाशिवस्य । वशीकृतमायात्वं च बोध्यते । शाम्यति परमानन्दरूपेण निर्विकारो भवतीति शिवः । " निस्त्रैगुण्ये शिवाय नम इति महिम्नस्तवे तथा श्रूयते " ॥ शेरते सज्जनमनांस्यस्मिन्निति । शेतेसज्जनमनसि अयमिति वा शिवः ॥ एतादृक्छिवः मे

मनसि सदानिवसतु इति भक्तप्रार्थनामन्त्रमिदं ॥ एकोनविंशत्यनुवाकभाष्यम् ॥

मूलम्——नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेम्बिकापतय उमापतये पशुपतये नमो नमः ॥

इति नारायणे विंशत्यनुवाकः ॥ २० ॥

भाष्यम्—नमो हिरण्यवाहव इति–हिरण्यबाहवे । हिरण्यरूपहस्ताय । हिरण्याभरणविशिष्टहस्तायेत्यर्थः ॥ "हिरण्यबाहवे सेन्यान्ये दिशां च पतये नमो नम इति शतरुद्रीये शिवस्य तथाश्रूयते" । हिरण्यवर्णाय । रुक्मवर्णाय । "यदापश्यत्पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिमितिश्रुतेः" ॥ हिरण्यरूपाय । रजतरूपाय । शुद्धस्फटिकसंकाशरूपायेत्यर्थः ॥ स्यात्कोशश्च हिरण्यं च । हेमरूप्येकृताकृतेत्यमरकोशः ॥ श्लो ॥ " मेरुकैलासवासाय । शुद्धस्फटिकरूपिणे । हिरण्मयाय शर्वायमहाकैलासवासिनेत्यादिशिवागमोक्तरीत्या " । महेश्वरस्य शुद्धस्फटिकवर्णत्वं । सदाशिवस्य । हिरण्मयत्वं युक्तं भवति । हिरण्यपतये 'हयगतिकान्त्योरिति' धातुवशाद्धयतीति हिरण्यं । तेज इत्यर्थः । तद्रूपाणां सूर्यचन्द्राग्नीनां पतिः । अधिपतिः । तेभ्यो अधिकतेजस्वीत्यर्थः । "तस्य भासा सर्वमिदं विभातीति श्रुतेः" । यद्वा । हिरण्यानां धनानां पतिः । प्रभुः । सर्वैश्वर्यसम्पन्न इत्यर्थः । अम्बिकापतिः । त्रिगुणात्मिकमायायाः पतिः । उमापतिः । प्रणवात्मकचिच्छक्तेः पतिः । भर्ता । "मायान्तु प्रकृतिं विन्द्यान्मायिनं तु महेश्वरमिति श्रुतेः" । "यस्य मात्रात्रयं नाम व्यक्तं सत्प्रणवात्मकं । बभौह्रस्वद्वयं दीर्घं द्विमात्रत्वादुमैवसेति

शंकरसंहितावचनं" । पशुपतये । पशूनां ब्रह्मविष्ण्वादिदेवानां पतिः । प्रभुः । तथा स्कान्दे ॥ श्लो ॥ "पशूनां ब्रह्म विष्ण्वादिदेवानां पतिरीश्वर ॥ इतिश्रूयते" पशूनांपतयेजगतां पतयेत्यादिना शतरुद्रीये॥ अहमेकः प्रथमं "पशूनामधिपतिरसानीति" त्रिपुरसंहारानुवाके शिवस्य पशुपतित्वश्रवणादत्र न नारायणस्यावकाशः' ॥२०॥

विंशत्यनुवाक भाष्यं समाप्तम्

मूलम्—ऋतँ सत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलं । ऊर्ध्वरेतं विरूपाक्षं । विश्वरूपाय वै नमोनमः ॥

एकविंशत्यनुवाकः ।

भाष्यम्—ऋतं सत्यमिति ॥ ऋतं । ज्ञानगम्यं । सत्यं । त्रैकालिकावाध्यं । परं ब्रह्म । मूर्तित्रयातीतं ब्रह्म । "प्रपंचोपशमं । शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः । शिवोद्वैतः इतिमाण्डूक्ये तथा श्रूयते" । पुरुषः । पूर्णाह्वापुरुषः । कृष्णपिङ्गलं अम्बिकायाः शामवर्णत्वात्तदर्धाङ्गित्वेन शिवस्यकृष्णपिङ्गलत्वं युक्तं । मातामरकतश्यामेत्यादिषु । पार्वत्यास्तथात्वं वहुधा श्रूयते । ऊर्ध्वरेतं । उत्कृष्टरेतः । कृशानुरेतः । हिरण्यरेत इतिवार्थः ॥ "कृशानुरेतः । सर्वज्ञः । हिरण्यरेतोदुर्धर्ष इत्यमरकोशशिवसहस्रनामावल्यादौ तथा श्रूयते" । विरूपाक्षं । विरूपाणि । पङ्क्तिव्यत्यस्तानि । अक्षीणि । नेत्राणि यस्यासौ । तथोक्तः । त्र्यम्बक इत्यर्थः । "त्र्यम्बकंयजामहेति श्रुतेः" । विश्वरूपाय अष्टमूर्त्यात्मकायेत्यर्थः ॥ एतेन । परशिवस्य । "द्वेवा ब्रह्मणोरूपेति श्रुत्युक्तरीत्या" मूर्त्तामूर्तत्वमुपपादितं भवति ॥ इत्येकविंशत्यनुवाकभाष्यंसमाप्तम् ।

मूलम्—सर्वोह्येषरुद्रस्तस्मै रुद्राय नमो अस्तु । पुरुषो वै रुद्रस्तन्महो नमोनमः ॥ विश्वं

भूतं चित्रं बहुधा जातं जायमानं च यत् ।
सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु ॥२२॥

इति द्वाविंशत्यनुवाकः ॥

भाष्यम्—सर्वोह्येषरुद्रइति ॥ एषसर्वः । परिदृश्यमान महदहङ्कारादिसर्वप्रपञ्चं । रुद्रोहि । रुद्रपदैकान्तिकशिव-एव । न नारायणः । तस्मै रुद्राय तादृग्रुद्राय मे मम नमः । अस्तु ॥ भवतु । एतेन शिवैकान्तिकभक्तिः सूच्यते ॥ हिशब्दोत्र इतरार्थव्यवच्छेदार्थकः ॥ * ॥ * ॥ * ॥ * ॥

पुरुषो वै रुद्रः । रुद्रएव पुरुष इत्यर्थः । अत्रवैशब्दो नारा-यणस्य स्त्रीत्वनिश्चयार्थबोधकः । पूर्वाध्यायेषु । एतदध्याये च । वासुदेवः पराप्रकृतिरित्यादिना नारायणस्य बहुधा निरूपितत्वादत्र स्त्रीत्वनिरूपणं पुनर्नकृतं । तन्महः । तत् । रुद्रः । महः । साधनान्तरनिरपेक्षस्वप्रकाशकविश्वं भूतमिति । भूतं । भूतकालोत्पन्नं । जातं । वर्तमानकालीनं । जायमानं । भविष्यत्कालिकं । बहुधाचित्रं । चतुर्लक्षभेदेन विचित्रं । विश्वं । विष्णवदि चेतनाचेतनप्रपंचं । सर्वोवैरुद्रः । रुद्रशक्यु-पादानकारणत्वाच्छक्तिशक्तिमतोरभेदाच्चरुद्रात्मकं विष्णवा-दीनां निरवद्यं । शिवशक्तिसामरस्यप्रभावमत्र प्रपंचितमिति द्वविंशत्यनुवाकभाष्यंसमाप्तम् ॥ २२ ॥

मूलम्—कद्रुद्राय प्रचेतसे ॥ मीडुष्ठमायतव्यसे ।
वोचेमशंतमंहृदे ॥ सर्वोह्येषरुद्र स्तस्मै
रुद्राय नमो अस्तु ॥

इति नारायणे त्रयोविंशत्यनुवाकः ॥२३ ॥

भाष्यम्—कद्रुद्रायेति ॥ कइवाचरतीतिकत् । रुद्राय । स्रष्टेत्यर्थः । प्रचेतसे । सर्वज्ञाय । मीढुष्टमाय । सेक्तृत्तमाय । वर्षादिभिः सेचकाय । प्रयोजककर्तेत्यर्थः । तव्यसे । तपःफलरूपाय । हृदे । दिव्यमङ्गविग्रहाय । शन्तमं । सुखावहं । स्तोत्रं । वोचेम । वदाम इत्यर्थः । रुद्रशब्दनिर्वचनानि रुदमज्ञानं द्रावयति नाशयतीतिरुद्रः । रुविरादानेति धातोः । रुरं वेदं । ब्रह्मणे राति ददातीतिवारुद्रः । प्रणवरूपवृत्त्या स्वात्मानं राति प्रापयतीति वारुद्रः । रुदत् । सुखं राति ददातीति वा रुद्रः । रुतं संसारदुखं द्रावयतीति वारुद्रः । रुतमशुभं द्रावयतीति वारुद्र इत्यनेकवृत्त्या रुद्रशब्दस्य भगवता व्यासेन रुद्रभाष्ये विद्यारण्यादिमहद्भिश्च शिवपरत्वावसायात् ॥ शिवेरूढिरिति विज्ञेयं यदिरुद्रपदस्य अवयवशक्त्यानारायणेरुढिरङ्गीक्रियते? । तर्हि नारमयनं यस्यासाविति व्युत्पत्या नारायणशब्दस्य नक्के रूढिः । किं ? नस्यादितिचिन्त्यं ॥ इति त्रयोविंशत्यनुवाकभाष्यं समाप्तम् ॥ २३ ॥

मूलम्—यस्य वैकङ्कत्यग्निहोत्र हवणी भवति ॥ प्रतिष्ठिताप्रत्येवास्याहुतयस्तिष्ठन्त्यथो प्रतिष्ठित्यै ॥

इति चतुर्विंशत्यनुवाकः ॥ २४ ॥

भाष्यम्—यस्येति ॥ यस्य यजमानस्य । अग्निहोत्रहोमसाधन भूतपात्रविशेषो विकंकताख्यवृक्षप्रकृतिको भवति । प्रतिष्ठा भवन्ति । के प्रतिष्ठाभवन्तीत्यत्राह ॥ प्रत्येवास्याहुतय इति ॥ आहुतयः । प्रतिष्ठिता भवन्ति ॥ ता यजमनस्य प्रतिष्ठित्यै प्रकल्पन्त इत्यर्थः ॥ २४ ॥ इति चतुर्विंशत्यनुवाकभाष्यम् ॥

मूलम्—कृणुष्व पाज इति पंच ॥

इति पंचविंशत्यनुवाकः ॥

भाष्यम्–कृणुष्वपा इति पंचमन्त्राः रक्षोशान्त्यर्थमिह-पठितव्या इत्यर्थः ॥ इति पंचविंशत्यनुवाकभाष्यं समाप्तम् ॥२५॥

मूलम्—अदितिर्देवा गन्धर्वा मनुष्याः पितरो सुरास्तेषाँ सर्वभूतानां । माता मेदिनी । महती मही सावित्री गायत्री जगत्युर्वी पृथ्वी बहुला विश्वा भूता कतमा काया सा सत्येत्यमृतेति वसिष्ठः ॥

इति नारायणे षड्विंशत्यनुवाकः ॥ २६ ॥

भाष्यम्—अदितिर्देवा गन्धर्वा इति ॥ देवगन्धर्वमनुष्य पितृसुरसर्वभूतमातृत्वयुक्ता । मेदिन्यादिशब्दप्रवृत्तिनिमित्त-गुणवत् । कतमा काया सा सत्यादिशब्दिता । भूमिरेव । खण्डनानर्हत्वाद्भूमेरदितित्वं । एवं भूमिं वसिष्ठः प्रशशंसेत्यर्थः ॥ इति षड्विंशत्यनुवाकभाष्यं समाप्तम् ॥ पूर्वोक्तसर्वशिवात्मक-ज्ञानस्य चित्तशुद्धिद्वारासम्भवात्तस्य च नित्य नैमित्तिकादि कर्मानुष्ठानस्य हेतुत्वाच्च । तत्कर्माचरणमुपदिशति ॥ तत्रतत्र इति षड्विंशत्यनुवाकभाष्यम् ॥

मूलम्—आपो वा इदं सर्वं विश्वा भूतान्यापः । प्राणा वा आपः ॥ पशव आपोन्नमापो-मृतमापःसम्राडापो विराडापस्छन्दाँस्यापो

ज्योतींष्यापो यजूँष्यापस्सत्यमापः सर्वा देवता आपो भूर्भुवस्सुवराप ॐ ॥

इति नारायणे सप्तविंशत्यनुवाकः ॥

भाष्यम्—आपो वा इति ॥ सम्यग्राजतीति सम्राट् ॥ विशिष्य राजतीति विराट् । स्वयमेव राजत इति स्वराट् । ओमिति ब्रह्मात्मकत्वमुच्यते ॥ सर्वात्मकत्वेन अपां प्रशंसार्थंमन्त्रमिदं ॥ तदभिमन्त्रणादौ विनियुक्तः इति सप्तविंशत्यनुवाकभाष्यं समाप्तम् ॥ २७ ॥

मूलम्——आपः पुनन्तु पृथिवीं । पृथिवीपूता पुनातुमां ॥ पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम् ॥ यदुच्छिष्टमभोज्यं । यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापो सतां च प्रतिग्रहँ स्वाहा ॥ २८ ॥

इति नारायणे अष्टविंशत्यनुवाकः ॥

भाष्यम्—आपः पुनन्त्विति ॥ मध्याह्नजलपानविनियुक्तमन्त्रमिदं । या आपः सन्ति ॥ ताः पृथिवीं पुनन्तु । प्रक्षालनेनशोधयन्तु । अपां सकलदेवतास्वरूपत्वात्परमपवित्रत्वाच्च । पवित्रकरणं युक्तं । "आपो वै सर्वा देवता इति श्रुतेः" । सा च पृथिवी ताभिरब्धाराभिरिति शेषः । पूता पवित्रीकृता । शुद्धासतीत्यर्थः । मामनुष्ठातारं । पुनातु । शोधयतु । उत्तरे कर्मण्यधिकारिणं करोत्वित्यर्थः । "नवर्षधारास्वाचामेदिति निषेधात्" ॥ भूमिगतत्वसिध्यर्थमापः पुनन्त्वितिप्रार्थितं ॥ भूमगतास्वप्स्वाचम्य पूतो भवतीति वाक्यदर्शनात् । तत्प्राशनेन पृथिवी पूता पुनातु मामिति प्रार्थ्यतेतियावत् ॥ ब्रह्मणस्पतिः ।

वेदपतिः। सकलवेदप्रतिपाद्यः इत्यर्थः। परमात्मेतिभावः। "वेदैश्च सर्वैरहमेव वेद्या इति श्रुतेः"। षष्ठ्याः पतिपुत्रेत्यादिना पत्यादौ परे षष्ठी विसर्गस्य छन्दसि वहुलमितिसत्वं। परमेश्वरः। पुनन्तु। पुनातु। वचनव्यत्ययः छान्दसः। पृथिवीं पुनात्विति भावः। ब्रह्म पूता पुनातु मां। परमेश्वरेणपवित्रीकृता पृथ्वीमां पुनात्वित्यर्थः। इदानीं स्वकृताकृत्यं परिगणयन् तन्निवृत्तये साक्षादेवापः प्रार्थयति॥ यदिति। उच्छिष्टं अन्योज्झितं अन्यभुक्तशेषं वा। भुक्तं यदस्ति। तत्। अभोज्यं। भोक्तुमयोग्यं। केशकीटमूषकपुरीषकादिसंयुक्तमन्नं भुक्तमिति यदस्ति। तत्। यद्वा। किं च। मम। दुश्चरितं। अगम्यागमनादिकं। यदस्ति। तत्सर्वमापः। पुनन्तु। शोधयन्तु। पवित्रं मां कुर्वन्त्वितियावत्॥ * ॥ * ॥

असतां च। शूद्रादीनां च यत्प्रतिग्रहं तदपि। परिहृत्यमां पुनात्वित्यर्थः। स्वाहा शब्दस्तु आचमनप्राशन सूचनार्थकः॥ एतन्मन्त्रार्थश्लोका लिख्यन्ते॥ श्लो॥ "आपः पुनन्तु पृथिवीं। पूताताभिः। पुनातुमां। पुनन्तु ब्रह्मणस्पतिर्वेदवेद्यः पुनातुमां। पूता इत्यत्र पूतेति। ब्रह्मपूता पुनातुमां। यदुच्छिष्टमभोज्यं च। यद्वा दुश्चरितं मम॥ ........सर्वस्मादहं स्वापो स्मान्मामसतां च प्रतिग्रहात्॥ पुनन्त्वापः इतिध्यात्वा। स्वाहेत्युक्त्वा जलंपिवेदिति हरदत्ताचार्यैरेवमुक्तम्"॥ ......

इत्यष्टविंशत्यनुवाकभाष्यं समाप्तम्॥ २८॥

मूलम्—अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्योरक्षन्तां। यदह्नापापमकार्षं। मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना। अहस्तदवलुम्पतु। यत्किंच

दुरितं मयि । इदमहं मामृतयोनौ ॥ सत्ये ज्योतिषि जुहोमि स्वाहा ॥

इति नारायणे एकोनत्रिंशत्यनुवाकः ॥ २९ ॥

भाष्यम्—अग्निश्चेति॥ सायंकालजलप्राशनमन्त्रमिदं॥"अग्निरग्न्यात्मकोरुद्रः रुद्रोवा एष यदग्निरितिश्रुतेः"। मन्युश्च । तस्य-क्रोधश्च । क्रोधात्मिकाशक्तिरित्यर्थः । मन्युपतयश्च । क्रोधिस्वामिनो क्रोधात्मकविस्फुलिङ्गाः रुद्रगणाश्च एते सर्वेदेवाः । मन्युकृतेभ्यः । मन्युना कोपेन कृतेभ्यः । दुरितेभ्यः । मा । मां । रक्षन्तां । प्रार्थनायांलोट् । ते सर्वे देवाः क्रोधकृतपापान्विनाशं कृत्वा शिवैकशरणं मां रक्षन्त्विति भावः ॥ किंच । यत् । अह्ना । अह्नि । तृतीया सप्तम्यां परिणस्यते इतितात्पर्यं । यद्वा । अह्ना । अतीतेन दिनभागेनेति वास्यात् । घस्रो दिनाहनी वात्त्विति कोशात् । यत्पापं । दुरितं । मनसा । ईश्वरचिन्तनाकरणं । वाचा शिवनामस्तोत्राकरणं । हस्ताभ्यां गुरुचरेश्वरदास्याकरणं । पद्भ्यां । पादाभ्यां । शिवगुरुक्षेत्रागमनं । उदरेण । जठरेण । ईश्वरानर्पितपदार्थभोजनकरणं । शिश्ना । शिश्नेन । अगम्यागमनं । एवं रूपं । अकार्षं । कृतवानस्मि । प्रातःकालादारभ्यैतत्कालपर्यन्तं यद्दुरितमुक्तरीत्यांकृतं । तत् । अहः । दिवसरूपशिवः । अवलुंपतु । नाशयतु । "अहश्शूलायुधोदेवइति वचनात्"॥ "असौयस्ताम्रो अरुणउत बभ्रुः सुमङ्गल इतिशतरुद्रीये च" अह्नाधिदेवतात्वं शिवस्य प्रतिपादनादहः शब्देन शिवएव ग्राह्यः ॥ जडस्य तत्कर्तृत्वासम्भवात् । यत्किंचेति । किंच । उत । यत् । एतद्व्यतिरिक्तं पापं । मयि निष्पन्नमिदं । पापजातं सर्वं । तत्कर्तारंमांच । जीवं । अमृतयोनौ । मरणरहितजगत्कारण ॥ सत्ये त्रैकालिकाबाध्यस्वरूपे ॥......॥

ज्योतिषि । हृदयपुण्डरीकावच्छिन्नचिदाकाशस्थितस्वयंप्रकाशमानशिवे ॥ अहं । जुहोमि । होमं करोमि । अहमनेन होमेन सर्वं भस्मीकरोमीत्यर्थः । स्वाहा शब्दस्तुमन्त्रोच्चारणानन्तरमाचमनसूचनार्थकः ॥ इति नारायणे एकोनत्रिंशत्यनुवाकभाष्यम् ॥२९॥

मूलम्——सूर्यश्चमामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्तां ॥ यद्रात्र्या पापमकार्षं । मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना । रात्रिस्तदवलुम्पतु ॥ यत्किंच दुरितं मयि । इदमहं माममृतयोनौ । सूर्ये ज्योतिषि जुहोमि स्वाहा ॥

इति नारायणे त्रिंशत्यनुवाकः ॥ ३० ॥

भाष्यम्–सूर्यश्चेति ॥ प्रातर्जलपानमन्त्रमिदं । सूर्यः । सूर्यात्मारुद्रः । मन्युस्तत्क्रोधशक्तिः ॥ मन्युपतयः । हेडस्वामिनस्तद्रश्मीभूता रुद्रगणाः । "असौयस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । येचेमाँरुद्रा अभितो दिक्षु । श्रितास्सहस्रशोवैषाँ हेडईमहेतिश्रुतेः" ॥ ते सर्वे देवाश्च । मन्युकृतेभ्यः पापेभ्यः । मां रक्षन्तां रक्षन्त्वित्यर्थः ॥ किंच । यद्रात्र्यारात्र्यामित्यर्थः । विभक्तिविपरिणामः कार्यः । यत्पापमकार्षं । कृतवानस्मि । तत्सर्वं रात्रिः शिवशक्तिः शूलपाणिप्रियानिशीतिस्मृतेः ॥ अवलुम्पतु । विच्छेदयतु । नाशयत्वित्यर्थः । यत्किंचदुरितं मयि । मयि ततोन्यं यत्किंचिद्दुरितं वर्तते । तत्कर्तारं मांच । अमृतयोनौ । मोक्षहेतुभूतसहस्रारस्थिते । सूर्ये । सूर्यवत्प्रकाशमाने । ज्योतिषि । स्वयं प्रकाशमानपरशिवे । प्रसिद्धसूर्यान्तर्वर्तिनि शिवेवा । सूर्यरूपेशिवे वा । जुहोमि स्वाहा । होमं

करोमीत्यर्थः अहं मम । वृत्तिंत्यजामीतिभावः ॥ अत्रपूर्वाचार्यकृतश्लोकालिख्यन्ते ॥ सूर्योमन्युमामन्युपतयो मन्युजादघात् ॥ मुञ्चन्तु हस्तवच्छिश्नमनोवागुदरैरपि । रात्र्यामकार्षं पापं यद्रात्रिरेहवलुम्पतु । अबुद्धिकृतमप्येनो । यत्किंचिद्दुरितं मयि । तच्छान्त्यै माहं सूर्ये । जुहोमि ज्योतिषिस्वयं । प्रतिप्यामृतयोनौ मामुच्येयं मृत्युबन्धनादिति ॥ ……………… ॥ मनसा वाचेति वाक्यस्यपूर्ववद्बोध्यम् ॥

इति त्रिंशत्यनुवाकभाष्यम् ॥

मूलम्—ओमित्येकाक्षरं ब्रह्म । अग्निर्देवता ब्रह्म इत्यार्षं । गायत्रीछन्दं परमात्मास्वरूपं । सायुज्यं विनियोगः । आयातुवरदादेवी अक्षरं ब्रह्मसम्मितं । गायत्रींछन्दसाँ मातेदं ब्रह्मजुषस्वमे । यदह्नात्कुरुतेपापं तदह्नात्प्रतिमुच्यते । यद्रात्रियात्कुरुते पापंतद्रात्रियात्प्रतिमुच्यते ॥ सर्ववर्णे महादेवि सन्ध्या विद्ये सरस्वति । ओजोसि । सहोसि बलमसिभ्राजोसि देवानां धामनामासि विश्वमासि विश्वायुस्सर्वमासि सर्वायुरभिभूरों गयत्रीमावाहयामि । सावित्रीमावाहयामि । सरस्वतीमावाहयामि । छन्दऋषिमावाहयामि । श्रियमावाहयामि । बलमावाहयामि । गायत्रीया गायत्री । छन्दोविश्वा-

मित्रऋषि स्सवितादेवता । अग्निर्मुखंब्रह्मा-शिरोविष्णुर्हृदयं । रुद्रःशिखा । पृथिवी-योनिः । प्राणापानव्यानोदानसमानस प्राणाश्वेतवर्णासांख्यायनसगोत्रा गायत्री चतुर्विंशत्यक्षरात्रिपदाषट्कुक्षिः ॥ पंच-शीर्षोपनयने विनियोगः ॥ * ॥

भाष्यम्—एवं परशिवस्य अग्निश्चेत्यादिसंध्यांगमंत्र-प्रतिपाद्यत्वमुक्त्वेदानीं गायत्रीप्रतिपाद्यत्वं निरूपयितुं तत्स्तु-तिमारभते ॥ ओमित्यादिना ॥ ओमित्येकाक्षरं ब्रह्म । ओमित्ये कवर्णं शिवः । "शिवोमे अस्तु सदाशिवों । नमस्ताराायनम इत्यादिश्रुतिषु तथा श्रूयते" ॥ प्रणवस्य ऋष्यादिकं दर्शयति ॥ अग्निर्दैवता । अं । सकलवेदान्तप्रतिपाद्यत्वं । गच्छतीत्यग्निः । परमात्मा । "अगिरगिलगीतिदंडक धातुः" । "अग्नेर्नलोपश्चेति औणादिकसूत्रेणनिप्रत्ययः" । सलोपश्च । अस्य प्रणवस्य पर-शिवोधिदैवतमित्यर्थः ॥ ब्रह्मइति शिवमद्वैतं चतुर्थं मन्य-न्तेतिश्रुत्या मूर्तित्रयातीतपरब्रह्मशिवः । आर्षं । ऋषिः । रुद्रः ऋषिरित्यर्थः । विश्वाधिकोरुद्रोमहर्षिरितिश्रुतेः । गायत्रं छन्दं । गायत्री छन्दइत्यर्थः । परमात्मा । शिवः । "प्रीयतां भगवानीशः परमात्मा सदाशिवोमितिश्रुतेः" । सरूपं । परशिवस्य अंगभूत-त्वात्तत्स्वरूपत्वं । तदभिव्यक्तिस्थानत्वाद्वातत्स्वरूपत्वं प्रणव-स्य युक्तं भवति ॥ सायुज्यं । नदीसमुद्रवदैक्यरूपमोक्षे विनि-योग इत्यर्थः । इति शब्दः प्रकारार्थे । तथाचैवं प्रणवप्रकारो-विजानीयादित्यर्थः॥पूर्वाचार्यैः प्रणवे ब्रह्मऋषिः प्रोक्तश्छन्दोगाय-त्रमुच्यते । परमात्मा देवताया मोक्षादौविनियुज्यते ॥ अत-एवाग्निपदस्य परशिवपरत्वमुक्तं ॥ अथ सकलवेदमातरं

परशिव प्रतिपादिकां गायत्रीं प्रार्थयते । आयात्विति । वरदा । उपासकानामभीष्टफलप्रदा ॥ "वरदावामनेति ललितास्तोत्रे देवी मातृकात्मिकपराशक्तिरूपगायत्री । आयातु । सहस्रारा-म्बुजोद्भवमाकाशमायात्वित्यर्थः । यद्वा । आयात्विति । अस्म दनुग्रहार्थं दानप्रदशीलादेवी मत्सकाशमागच्छत्विति वास्यात् ततः किं तत्राह ॥ अक्षरं । नाशरहितं । ब्रह्मसम्मितं । सम्मितं सम्यग्वेदान्तेननिश्चितं ॥ ब्रह्म । सहस्रारस्थितस्वयंप्रकाशमान-शिवस्त्वमेवेतिशेषः । शक्तिशक्तिमतोरभेदादितिभावः । अस्तु । किंतत्राह । गायत्रीमिति । छन्दसां माता । सर्वेषां वेदानां जननी । सकलवेदनिर्गलितसारभूतत्वादित्यर्थः । तदाहमनुः । "त्रिभ्यएवतुवेदेभ्यः पादंपादमदूदुहत् ॥ तदित्सृचोस्याःसा-वित्र्याः । परमेष्ठी प्रजापतिरिति" ॥ गायत्रीं । गायत्रीं । छन्दो-भिमानदेवतेत्यर्थः ॥ प्रथमार्थे द्वितीया छान्दसं ॥ इदं । मत्कृतं स्तोत्ररूपंब्रह्म ॥ तपः । 'वेदस्तत्वं तपोब्रह्मेतिवचनात्' । जुषस्व । गृहाण । त्वमितिशेषः । जुषस्वेतिलिङ्गात् । गायत्रीत्वमागत्य-मामनुगृह्य । मदाचरितं स्तोत्रं जुषस्वेतिस्वकृतं भगवत्यैस-मर्पयतीति भावः । अथवा । वरदादेवी । अक्षरं । नाशरहितं । सम्मितं । सम्यग्वेदान्तप्रमाणेन निश्चितं ब्रह्म । जगत्कारण-परशिवं । उपदेष्टुमितिशेषः ॥ आयातु । अस्माकं शिवज्ञानं बोधयतुमागच्छत्वित्यर्थः । एतदेवस्पष्टयति । गायत्रमिति । छन्दसां मातागायत्रीपदाभिधेयाचिच्छक्तिः । मे मम । इदं । भ्राजद्धृदयपुण्डरीकमध्यस्थितं । ब्रह्म । परशिवं । ज्योतिर्मय शिवमित्यर्थः । जुषस्व । जोषयतु । उपदेशपूर्वकतया साक्षा-त्कुर्यादित्यर्थः । जुषस्वेतिछान्दसं रूपं ॥ तस्य फलमाह । यद-ह्नादिति । अह्नात् । अह्नि । यत्पापं कुरुते । करोति । तत्पापं । अह्नात् । अह्नि । प्रतिमुच्यते । अन्तर्ज्योतिर्लिङ्गानुसन्धानपुरुषा-

णामितिशेषः। एतेन यद्गात्र्यादिति। व्याख्यातं॥ अथगायत्र्याः सर्वात्मकत्वं दर्शयन्नेवसविशेषंप्रार्थयते। सर्ववर्णे इति॥ सर्ववर्णे। शाकिनीडाकिन्यादिसर्वशक्तिस्वरूपिणी। महादेवि। महादेवस्य। शिवस्यपत्नी महादेवी। तस्याः सम्बुद्धिः हेमहादेवि। त्वं ओजोसि। इन्द्रियाणां शक्तिरसि। सहोसि। शत्रूणामभिभवनशक्तिरसि। बलमसि। शरीरसामर्थ्यंरूपोसि। भ्राजोसि। दीप्तिरूपोसि। देवानां ब्रह्मविष्ण्वादीनां। धाम। तेजो यदस्ति। तन्नामासि। तदेवतवनामेत्यर्थः। अथवा। देवानां। दशावताराणां। धाम। निवासभूमिः। असि। "नारायणिकराङ्गुष्ठनखोत्पन्नदशाकृतिरिति ललितासहस्रनामावल्यां" तथा श्रूयते। नामप्रसिद्धौ। सर्वदेवताश्रयभूमिरसीति भावः। विश्वं। सर्वंजगदुपादानकारणत्वात्सर्वंजगद्रूपस्त्वमसि। विश्वायुः। संपूर्णायुःस्वरूपोसि॥ एवं सर्वमसि सर्वायुरित्युक्तानामनुवादः। यद्वा। विश्वं समस्तस्थावररूपोसि। विश्वायुः। स्थावरजातस्य आयुरपित्वमेवासि। अत्रायुः शब्देनसत्ताकालोविवक्षितः॥ सतु प्राणवायुरित्यर्थः। तस्य चेतनधर्मत्वादिति चिन्त्यं। एवं जंगमानामपिज्ञेयं। अभिभूः। सकलपापस्य तिरस्कारहेतुः। ॐ। प्रणवस्वरूपपरशिवोसि। एतत्सर्वं परमेश्वरशक्तित्वाच्छक्तिशक्तिमतोरभेदाच्च गायन्त्यास्स भवति॥ तादृशीं गायत्रीं। मदीये मनसि। आवाहयामि। उपसितुमितिशेषः एवं सावित्र्यादि रूपेण गायत्र्यावाहनं। अत्रैकस्या एव गायत्र्याः कालभेदेन नामभेदाङ्गीकाराद्गायत्र्यादिभेदेन आवाहनं युक्तं॥ तदुक्तं पराशरमाधवीये॥ गायत्रीनामपूर्वाह्णे। सावित्री मध्यमे दिने। सरस्वती च सायह्ने। सैवं सन्ध्या त्रिधामतेति—ग्रन्थान्तरे नामत्रयनिर्वचनं कृतं। गायत्री प्रोच्यते तस्माद्गायन्तं त्रायतेयतः। सवितु-

द्योतनात्सैव सावित्री परिकीर्तिता ॥ जगतः प्रसवित्री । वा । ग्रूपत्वाच्च सरस्वतीति ॥ छन्दांसि । गायत्र्यादीन् । ऋषीन् विश्वामित्रादीन् । श्रयन्त्येतामिति श्रीः । महालक्ष्मीः । तां आवाहयामि । अथ गायत्र्याश्छन्दऋषिदेवतादिस्वरूपं दर्शयति । गायत्र्या इति । गायत्र्याः । गायत्रीमन्त्रस्य । गायत्रीछन्दः । विश्वामित्रऋषिः । विश्वस्य अमित्रकः । "विश्वस्य वसुराटो-दितिसूत्राद्" विश्वामित्र इति रूपं सुप्रसिद्धं । तत्वोपदेशको रुद्रऋषिरित्यर्थः । सविता सवितृमण्डलमध्यवर्तिशिवः । उत । सवितृरूपेण भ्राजमानशिवोवा । देवता । अधिदेवतेत्यर्थः । परशिवचिच्छक्तिरूपत्वाद्गायत्र्याः परशिवदेवतात्वं युक्तमिति-ज्ञेयं । अग्निर्मुखं । घोरतनुविशिष्टशिवमुखं । ब्रह्मा । चतुर्मुखः । शिरः । विष्णुर्हृदयं । रुद्रः शिखा । अत्रापि कालरुद्रस्य ।ब्रह्म-विष्ण्वतिशयत्वात्तस्यशिखात्वं युक्तं । पृथिवीयोनिः । सर्व चेतनाचेतनजीवानामिहलोके उपादानकारणत्वात्तस्याः । योनि-त्वमुक्तं । प्राणापानव्यानोदानसमानरूपपंचप्राणात्मिकेत्यर्थः ॥ सप्राणनागकूर्मकृकरदेवदत्तधनंजयाद्युपप्राणयुक्ता गायत्री श्वेत-वर्णा । श्वेतवर्णविशिष्टा । परशिवचिच्छक्तित्वाच्छुद्धस्फटि-कसंकाशरूपेत्यर्थः ॥ त्रिगुणात्मिकत्वात्त्रिवर्णत्वं च तस्याः युक्तं ॥ तदुक्तं । गायत्रीतु भवेद्रक्तासावित्रीश्वेतवर्णका । सरस्वती तथा कृष्णा उपास्यावर्णभेदतः । इति ॥ साकिंगोत्रे-त्यत्राह । सांख्यायनऋषेः समानं गोत्रं यस्याः सा सांख्यायन-सगोत्रेत्युच्यते । चतुर्विंशत्यक्षरा चतुरधिकाविंशतिः अक्षराणि यस्याः सातथोक्ता । त्रीणि पदानि ऋग्यजुस्सामरूपपदानि यस्याः । सा तथोक्ता । अत्र "संख्याया अल्पीयस्या" इति चतुश्शब्दस्य पूर्वनिपातः ॥ .................. ॥ षट्कुक्षिः । प्राच्यादिदिक्चतुष्टयं । उर्ध्वाधोभागे मिलित्वा षट्कुक्षिर्भव-

तीतिभावः । यद्वा । षण्णां शक्तीनां कुक्षयो यस्याः सा तथोक्ता । पंच । सद्योजातवामदेवाघोरतत्पुरुषेशानरूपाणि शीर्षाणि । शिरांसि । यस्यासौ । पंचशीर्षः । उपरिनयनंयस्यासौ । उपनयनः । वर्णलोपात्पृषोदरइति पृषोदरादिगणपठितत्वात्साधुः । जीमूत इत्यादिषु बहुशस्तथा दृश्यन्ते ॥ सचासौ सश्च पंचशीर्षोपनयनः । तस्मिन् । शिवे विनियोगः । शिवशक्तित्वाच्छिवे विनियोग इति ज्ञेयं ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्र्यक्षणैरिति ध्यानश्लोकेगायत्र्याः । पंचशीर्षत्वत्रिनेत्रत्वादिपरशिवसारूप्यवर्णनात्तस्याः परशिवशक्तित्वमनिवार्यं । भगवतापण्डितभाष्यकारेण वीरभद्राराध्यादिपूर्वाचार्यैश्चस्वकृत ग्रन्थेषु सन्ध्यावन्दनस्योपक्रमादुपसंहारपर्यन्तस्थितमन्त्राणां शिवप्रतिपाद्यत्वं बहुधा राद्धान्तितः । विशेषमिच्छद्भिस्तत्र द्रष्टव्यं ॥ इति नारायणे एकत्रिंशत्यनुवाकभाष्यंसमाप्तम् ॥३१॥

**मूलम्—ॐ भूः । ओं सुवः । ॐ महः । ॐ जनः । ॐ तपः । ॐ सत्यं ॥ ॐ तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियो योनः प्रचोदयात् ॥ ३२ ॥**

## द्वात्रिंशत्यनुवाकः ॥

भाष्यम्—ॐ भूरिति ॥ भूलोकाद्याः सप्तलोका अपि । ॐ । ओंकारात्मक शिव एवेत्यर्थः ॥ "शिवोमे अस्तु सदाशिवोमिति श्रुतेः" ॥.....................

ॐ तत्सवितुरिति ॥ सवितुर्देवस्य । सवितृरूपदेवस्येत्यर्थः । राहोः शिर इत्यादिवदौपचारिकषष्ठी । मण्डलान्तरगतमिति शेषः । "मण्डलान्तरगतंहिरण्मयं भ्राजमानवपुषं शुचिस्मितं ।

चण्डदीधितिमखण्डविग्रहं चिन्तयेन्मुनिसहस्रसेवितमितिस्मृतेः" ॥ वरेण्यं । श्रेष्ठः शिवस्य ब्राह्मणदेवतात्वात् । "त्वंदेवेषु-ब्राह्मणोस्यहं मनुष्येषु ब्राह्मणः । ब्राह्मणो वै ब्राह्मणमुपधावतीति" श्रुतौ तथानिरूपणात् । तदितिद्वितीया परिणमते । सुपांसुलु-गित्यपिविभक्तिलोपः । तत् । तं सदाशिवं धीमहि । ध्यायेमहि । पृथग्जनदुष्प्रापस्य सदाशिवध्यानस्य एकेन कर्तुमशक्यत्वाद्-बहुत्वोक्ति रितिध्येयं । तत्किमर्थमित्यत आह ॥ धिय इति । यः । भर्गः । शिवः पूर्वपादस्थस्यापि भर्गपदस्यान्वयबलादत्रा नुषंजनं कार्यं । नः । अस्माकं । धियः । धर्मादिगोचरबुद्धयः । प्रचोदयात् । प्रकृष्टेन प्रेरयेत् । सम्यग्ददातीत्यर्थः । "सोमः पवते जनिता मतिनां । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता-पुराणि । रुद्रो जनानां हृदये सन्निविष्टः । इत्यादि बहुश्रुतिषु " शिवस्य बुद्धिप्रेरकत्वं स्पष्टमुक्तं । यद्वा । यो भर्गः । शिवः । नः । अस्मान् । धियः । अज्ञानात् । धीशब्दोत्र व्यतिरेकलक्षणया अज्ञानार्थो भवति । यथा नष्टेन्दौदर्शप्रयोगः । यथाधीरे । कातर-शब्दप्रयोगः । प्रचोदयात् । प्रकर्षेणज्ञानपारं गमयेदिति प्रार्थ्यते । अस्मिन्नर्थे श्रुतिः ॥ उमासहायं परमेश्वरं प्रभुंत्रिलोचनं नीलकण्ठं प्रशान्तं । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्त साक्षिं तमसः परस्तादिति । तमसः अज्ञानात् । परस्तात् । परमिति श्रुत्यर्थः ॥ इतिकेचिद्वदन्ति ॥ अत्रभर्गशब्दस्यसकारा-न्तत्वंमवलम्ब्य तेजः परत्वं वदन्ति केचिन्मन्दमतयः । तदसंगतं ॥ ...... ॥ चतुर्वेदपारगैर्हरदत्ताचार्यैः । चतुर्वेदसार-संग्रहे श्रीकण्ठभर्गपदमप्यनघं तवाद्यं तेजः परं भवतिचेद्धृ-वमाद्युदात्तं । तस्माददन्त इति कोशवशाद्वैमि । मार्तण्डमण्डलगतः शिव एव नान्य इति राद्धान्तितत्वात् " भर्गोदेवस्यरुद्रात्मने शिखायैवषडितिबोधायनमहर्षिणागा-

यञ्यङ्गन्यासेष्वदन्तत्वेन प्रयोगात् ।" भर्गइति द्वितीयः पादइति त्रिपुरतापनीयगायत्रीहृदये भर्गशब्दस्यादन्तत्वदर्शनाच्चपूर्वोक्तभर्गपदस्य ।सकलदुरितार्तिभंजकसदाशिवएवार्थ इति राद्धान्तितं । श्रीकरभाष्ये पण्डितभाष्यकारैर्ज्योतिरधिकरणे गायत्रीविचारः बहुधाकृतः । विशेषमिच्छद्भिस्तत्रद्रष्टव्यं ॥

इति नारायणे द्वात्रिंशत्यनुवाकभाष्यं समाप्तम् ॥ ३२ ॥

**मूलम्—ॐ मापो ज्योतिरसो मृतं ब्रह्म भूर्भुवस्सुवरोम् ॥ ३२ ॥ इति द्वात्रिंशत्यनुवाकः ॥**

भाष्यम्—ओमापो ज्योतिरसो मृतमिति ॥ अत्र प्रथमतः । प्रणवपदं ओं भूः । भूलोकाभिमानिन्योरुद्रदेवताः । "सहस्राणि सहस्रशोयेरुद्रा अधिभूम्यामिति श्रुतेः ,, ॥ ओंकारात्मकशिवत्वेन स्तूयन्तेतितात्पर्यं । ओं भुवः । " अस्मिन्महत्यर्णवेन्तरिक्षाभवा अधीतिश्रुतेः ,, ॥ तत्तल्लोकस्थितरुद्रगणाः । तत्तल्लोकाश्च । ॐ । ओं कारात्मकशिवएव । आपः । जलानि । तदधिष्ठानदेवता इत्यर्थः । ज्योतिरग्निः तल्लोकस्थितदेवताश्च । रसोमृतं । रसः । परमानंदरूपः । अमृतं । मोक्षरूपः । ओं । ओंकारात्मकसदाशिवएवेत्यर्थः । सर्वो वै रुद्र इति श्रुतेः ।

॥ इति द्वात्रिंशत्यनुवाकभाष्यम् ॥

ओं कार रूपनिष्पत्ति । प्रकारोयं ॥ अवरक्षण इति धातोः । "अवतेष्टिलोपश्चेत्यौणादिकसूत्रेण,,मन्प्रत्ययोविहितः। तस्य "ज्वरत्वरेत्यादिना,, ऊठि । ततोगुणः । ततःश्लिष्टोच्चारणमिति। प्रक्रियया ओमितिरूपं निष्पन्नं ॥... ...... अकार उकार मकार इतितानेकधा समभवत्तदेतदोमिति श्रुतेः ॥ ३३ ॥

मूलम्—उत्तमे शिखरेजाते भूम्यां पर्वतमूर्धनि ।
ब्राह्मणेभ्योऽभ्यनुज्ञातागच्छदेवियथासुखं ।
स्तुतो मया वरदा वेदमाता प्रचोदयन्ती
पवने द्विजाता । आयुः पृथिव्यां द्रविणं
ब्रह्मवर्चसं मह्यं दत्वा प्रजातं ब्रह्मलोकम् ॥

इतित्रयस्त्रिंशत्यनुवाकः ॥ ३३ ॥

भाष्यम्—भूम्यामवस्थितोयोमेरुः । तस्य मूर्धन्युपरिभागे । जाते । विद्यमाने । उत्तमेश्रेष्ठे । शिखरे । उत्कृष्टशिखराकार कैलासे इत्यर्थः । स्थातुमितिशेषः । ब्राह्मणेभ्यः । उपासकेभ्यः । द्विजेभ्यः । अभ्यनुज्ञातंसत् । हे देवि । हे परशिवशक्ते । भगवति । गच्छ । यथासुखं । अस्मानुपासकाननुगृहीत्वा यथासुखं भवद्भर्तृभवनभूतमहामेरुकैलासं यथाकामं गच्छेत्यर्थः । ब्रह्मलोकंशिवलोकमित्यर्थः । शिष्टं स्पष्टं ॥ इतित्रयत्रिंशत्यनुवाकभाष्यं समाप्तम् ॥ ३३ ॥

मूलम्—घृणिः सूर्यआदित्यो मर्चयन्ति तपस्सत्यं
मधुक्षरंतितद्ब्रह्मतदाप आपोज्योतिरसो-
मृतं ब्रह्मभूर्भुवस्सुवरोम् ॥ ३४ ॥

भाष्यम्—घृणिरिति ॥ जिघर्ति परमात्मनोसावितिजिघर्ति प्रकाशतीति वा घृणिः । जीवः । घृक्षरणदीप्त्योरितिहि धातुः । घृणिः । घृणय इत्यर्थः । वचनव्यत्ययश्छान्दसः । शिवभक्ता इतियावत् । सूर्येसूर्यमण्डले । आदित्यो । आदित्यशरीरकं । शिवं । अर्चयन्ति । पूजयन्ति । तपः । आदित्य-

मण्डलवर्तिशिवएवेत्युपासनं सत्यं । आदित्योवेत्यादि श्रुतिप्रसिद्धं । एतेन सूर्यमण्डलान्तर्वर्तित्वेन नारायणोपासनं तान्त्रिकमिति राद्धान्तितं । सः । मधुमोक्षं । क्षरन्ति । निष्पादयन्ति॥ उपासकानां मोक्षं ददातीत्यर्थः । वचनव्यत्ययश्छान्दसः ॥ तत् । आदित्यगतशिवः । ब्रह्म ब्रह्मपदवाच्यशिवः । तत् । शिवः । आपः । अपशब्दवाच्यः । तद्रूपो वा ॥ "कं ब्रह्मत्वं ब्रह्मेतिश्रुतेः" । आपोज्योतिः । हृत्पुण्डरीकजलमध्यभासमान प्राणलिङ्गात्मकः । रसः । आनन्दरूपः । अमृतं । मोक्षरूपः । ब्रह्मसर्वव्यापकः । "बृहि बृंहि वृद्धावितिहिधातुः" । भूर्भुवः सुवर्लोकाश्च । ॐ । ओंकारात्मक शिवएवेत्यर्थः । सर्वो वैरुद्रइतिश्रुतेः । अत्र आदित्योमिति विशेषणपूर्वपदकर्मधारयः । आदित्यं च तत् ॐ च आदित्यों । आदित्यं । आदित्यशरीरकं । ॐ । ओंकारात्मकशिवमित्यर्थः । शिवोमे अस्तु सदाशिवों । नमस्तारायेत्यादिषु प्रणवस्य शिवात्मकत्वं बहुधा प्रपंचितं । अचेतनकिरणानां ब्रह्मत्वादिधर्माणामसम्भवादेतदनुवाकस्य शिवपरत्वं युक्तम् ॥ ३४ ॥

मूलम्—ॐ भूर्भुवस्सुवर्महर्जनन्तपस्संत्यं तद्ब्रह्मतदाप आपो ज्योतीरसोमृतं ब्रह्मभूर्भुवस्सुवरों ॥ ओं तद्ब्रह्म । ओं तद्वायुः । ओं तदात्मा । ओं तत्सर्वं । ओं तत्पुरोर्नमः ॥ ३५ ॥

इति नारायणे पंचत्रिंशत्यनुवाकः ॥

भाष्यम्—ॐ भूरिति ॥ अस्मिन्ननुवाके ॥ प्रणवात्मक शिवस्यैव सर्वात्मकत्वेन स्तुतिः । पुरः । पूर्वभावि । कार्यनि-

यतपूर्ववर्ति । कारणमित्यर्थः । अहमेकः प्रथममासमिति-श्रुतेः । अतस्तस्मै । प्रणवात्मकशिवाय । नमः । नकारे रेफ-श्छान्दसः ॥ इति पंचत्रिंशत्यनुवाकभाष्यं समाप्तम् ॥ ३५ ॥

मूलम्—ओं मन्तश्चरति भूतेषु गुहायां विश्वमूर्तिषु। त्वं यज्ञस्त्वं विष्णुस्त्वं वषट्कारस्त्वं रुद्रस्त्वं ब्रह्मत्वं प्रजापतिः ॥ ३६ ॥

इतिनारायणे षट्त्रिंशत्यनुवाकः समाप्तः ॥

भाष्यम्—ओमन्तश्चरतीति ॥ ओङ्कारात्मकशिव ॥ त्वं । सर्वेषां ब्रह्मविष्ण्वादीनां गुहायां दहरपुण्डरीके । चरसि । संचरसि । प्रकाशसेत्यर्थः । अतः सर्वात्मकस्त्वमेवे-त्यर्थः ॥ ३६ ॥ इति ॥

मूलम्—अमृतोपस्तरणमसि । प्राणे निविष्टोमृतं जुहोमि प्राणाय स्वाहा । अपाने निविष्टो-मृतं जुहोमि अपानाय स्वाहा । व्याने नि-विष्टोमृतं जुहोमि । व्यानाय स्वाहा ॥ उदाने निविष्टोमृतं जुहोमि । उदानाय स्वाहा । समाने निविष्टोमृतं जुहोमि । समानाय स्वाहा । ब्रह्मणि म आत्मा अमृतत्वाय ।

इतिनारायणे सप्तत्रिंशत्यनुवाकः समाप्तः ॥

भाष्यम्—अमृतोपस्तरणमसीति ॥ पूर्वापोशनमन्त्रमिदं । पात्रे हविः संसर्गाय क्रियमाणद्रवद्रव्यसेचनमुपस्तरणं । हे

अमृत । त्वमुपस्तरणमसीतिहस्तस्य जलस्याभिमन्त्रणं । उपस्तीर्यतेनेनेति । व्युत्पत्या उपस्तरणसाधनमुच्यते । प्राणइति । प्राणसन्तर्पणे । अभिनिविष्टः सन् अमृतभूतमन्नं । प्रसादरूपमन्नमित्यर्थः । जुहोमि । होमं करोमि । एवमुत्तरत्रापि । ब्रह्मणीति । प्राणलिङ्गरूपशिवे । हुतः । समर्पितः सन् । अमृततत्वाय कल्पतामित्यर्थः ॥...॥सप्तत्रिंशत्यनुवाकभाष्यं समाप्तम् ।

मूलम्—प्राणे निविष्टोमृतं जुहोमि शिवोमा विशाप्रदाहाय प्राणाय स्वाहा ॥ अपाने निविष्टो मृतं जुहोमि शिवो माविशा प्रदाहाय अपानाय स्वाहा ॥ व्याने निविष्टोमृतं जुहोमि शिवोमाविशा प्रदाहाय व्यानाय स्वाहा ॥ उदाने निविष्टोमृतं जुहोमि शिवोमा विशा प्रदाहाय उदानाय स्वाहा ॥ समाने निविष्टोमृतं जुहोमि शिवोमा विशा प्रदाहाय समानाय स्वाहा ॥ ब्रह्मणि म आत्मा अमृततत्वाय । अमृतापिधानमसि ॥

इत्यष्टत्रिंशत्यनुवाकः ॥

भाष्यम्—प्राणेनिविष्ट इति ॥ अयं मन्त्रः ॥ पूर्वमन्त्रेण विकल्पितः । शिवः । शिवार्पितत्वाच्छिवरूपः सन् । हे हूयमानप्रसाद । अप्रदाहाय । जाठराग्निकृतदाहाभावाय । शरीरगतसर्वपापदाहाभावाय वा ॥ मां प्रविशेत्यर्थः ।

एवमुत्तरत्रापि। अमृतापिधानमसि। अमृतरूपमाच्छादनमसि उत्तरापोशनार्थं हस्तस्थजलाभिमन्त्रणमन्त्रं। शिवप्रसाद-महिमावर्णं वास्यात्। इत्यष्टत्रिंशत्यनुवाकभाष्यम् ॥ ३८ ॥

मूलम्—श्रद्धायां प्राणे निविश्यामृतं हुतं प्राण-मन्नेनाप्यायस्व अपानोनिविश्यामृतं हुतं अपानमन्नेनाप्यायस्व। व्याने निविश्यामृतं हुतं व्यानमन्नेनाप्यायस्व ॥ उदाने निविश्यमृतं हुतं उदानमन्नेनाप्यायस्व। समाने निविश्यामृतं हुतं समानमन्नेनाप्या यस्व। ब्रह्मणि म आत्मा अमृतत्वाय ॥३९॥

भाष्यम्—श्रद्धायामिति ॥ जाठराग्न्यवच्छिन्नशिवं प्रति वचनमिदं। श्रद्धायां स्थित्वा। श्रद्धालुनामयेत्यर्थः ॥ प्राणेनिमित्ते हुतं। प्राणलिङ्गात्मकशिवायहुतं ॥ तेन। हुतेन। प्राणं पोषय एवमुत्तरत्रापि। पंच प्राणेषु आचारादिपंच लिंगानि वा योज्यनि। प्राणाधिष्ठिताचारलिंगाय इति। योज्यमित्यर्थः। अमृतं। शिवार्पितमन्नं। "रुद्रेणात्तममृतं वैदे-वाभोक्तकामा इति श्रुतेः"। इति नारायणे एकोनचत्वारिंशानु-वाकभाष्यम् ॥ ३९ ॥

मूलम्—प्राणानां ग्रन्थिरसि रुद्रो माविशान्तकस्ते-नान्नेनाप्यायस्व ॥ ४० ॥

भाष्यम्—प्राणानांग्रन्थिरसीति ॥ अन्तकः। सर्वपदार्थ-जीर्णकर्ता। रुद्रः। जाठराग्न्यवच्छिन्नशिवः। त्वं। प्राणानां ग्रन्थिरसि। अधिष्ठानभूतोसीत्यर्थः। अतः। जीवात्मकं मां

विश । प्रविश । मयिनिवासं कुर्वित्यर्थः । तेन अन्नेन । त्वत्समर्पितप्रसादेन । मां । आप्यायस्व । परितृप्तिंप्रापयेत्यर्थः । इति चत्वारिंशत्यनुवाकभाष्यम् ॥ ४० ॥

मूलम्—अङ्गुष्ठमात्रः पुरुषोंगुष्ठं च समाश्रितः ।
ईशः सर्वस्य जगतः प्रभुः प्रीणातिविश्वभुक् ॥ ४१ ॥

भाष्यम्—अंगुष्ठमात्रइति । अंगुष्ठं च समाश्रितः । अङ्गुष्ठपरिमितसूक्ष्महृद्यथावच्छिन्नः । अङ्गुष्ठमात्रः ॥ तदच्छिन्नत्वेन अंगुष्ठपरिमाणविशिष्टः । पुरुषः । पूर्वोक्तरुद्रस्य अभिव्यक्तस्थानमनेन प्रदर्शितं भवति । पुरुषः कइत्याकांक्षायामाह ॥ ... ... ॥ विश्वभुक् । विष्ण्वादिसर्वचेतनाचेतनसंहारकर्तेत्यर्थः । सर्वस्य जगतः । विष्ण्वादिसर्वजगतः । प्रभुः नियामकः । सर्वभूतदमनायनमः । ईश्वरः सर्वभूतानामित्यादिश्रुतिषुतथा श्रूयते । ईशः । शिवएवेत्यर्थः । शम्भुरीशः पशुपतिरितिकोशात्

॥ इत्येकचत्वारिंशत्यनुवाकभाष्यं समाप्तम् ॥

मूलम्—त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ ४२ ॥

भाष्यम्—त्र्यम्बकमिति ॥ सुगन्धि । निरतिशयपरिमलविशिष्टत्वं ॥ सर्वज्ञत्वादिमङ्गलगुणकत्वं । वा । पुष्टिवर्धनं । शमदमभक्तिवैराग्यज्ञानसमृद्धिकारकं । त्र्यम्बकं । लिङ्गरूपं शिवं । अमृतात् । आमरणात् । यजामहे । यजपूजासङ्गतीकरण इति धातोः । पूजां कुर्मः ॥ धारयामइति वा स्यात् । तेनहेतुना । बन्धनात् । वृन्तात् । पक्वदशायां । यथा उर्वारुकं । कर्कटीफलं । विमुच्यते । तथाहं । मृत्योः । जननमरणप्रवाह-

विशिष्टसंसारात्मकमृत्योः । मृत्तीयं । मुच्येयं । तादृक् संसारविमुक्तो भवेयमित्यर्थः । तथास्कान्दे । "त्र्यम्बकं महादेवं लिङ्गरूपमनामयं । दिव्यगन्धसमायुक्तं । ज्ञानवैराग्यसिद्धिदं । अमृताद्देहपातान्तं श्रद्धाभक्तिसुसंयुताः ॥ यजामहे । धारयामः । पूजांकुर्मो यथाविधि । पक्वकाले यथा वृन्तादुर्वारुकफलंभुवि ॥ ........... ॥ तथाहं मृत्युसंसाराद्विमुच्येयं न संशय इत्येतन्मन्त्रमुपबृहितं" ॥

इति द्विचत्वारिंशत्यनुवाकभाष्यं समाप्तम् ॥

मूलम्—मेधादेवी जुषमाणा न आगाद्विश्वाची भद्रा सुमनस्यमाना । त्वयाजुष्टाजुषमाणा दुरुक्त्यान् बृहद्वदेम । विदथे सुवीराः । त्वयाजुष्टंजुषभिर्भवतिदेवित्वया ब्रह्मागत श्रीरुतत्वया । त्वया जुष्टश्चित्रं विन्दते वसुपानो जुषस्वद्रविणेन मेधे ॥

इति ४३ अनुवाकः ॥

भाष्यम्—इतः पूर्वं परशिवं प्रस्तुत्य इदानीमनुवाकद्वयेनशिवज्ञाना नुकूल मेधादि प्राप्तर्थं परमेश्वरशक्तिभक्त्यादि प्रार्थनमुपदिशति ॥ मेधावीति ॥ विश्वमञ्चतीति विश्वाची । विश्वव्यापिनी । सुमनस्यमाना । सर्वप्रजासुशोभनमनोयुक्ता । मेधादेवी । मेधाप्रदापरमेश्वरचिच्छक्ते।जुषमाणा। प्रीतियुक्तासती।आगात्। आगच्छतु । हे देवि पूर्वंदुरुक्तान् । गर्हितान् शब्दान् जुषमाणाः । सेवमानावयमिदानीं त्वया जुष्टाः । अनुगृहीताः सन्तः । गुणै-

बृहत् । श्लाघ्यगुणयुक्तं वचः । वदेम । यस्माद्भवति । सुवीराः । वाचोविदधे । विहितवत् । त्वयासुवीर्ययुक्तानां वाचां । आस्मासुसंविधानात् । वयं समीचीनं वचः त्वदनुग्रहादनन्तरं वदामइत्यर्थः । त्वयाजुष्टइति । त्वया अनुग्रहीतोमन्त्रद्रष्टा भवति । त्वयानुगृहीतः शिवप्राप्तिसाधनलक्ष्मीवान् भवति । त्वयानुगृहीतश्चित्रं धनं लभते । हे मेधाप्रदे । चिच्छक्ते । तादृशीत्वं मां द्रविणेन अनुगृहाण । गुरुचरेश्वरदास्यानुकूलत्वेन द्रव्यं देहीत्यर्थः ॥

इति नारायणेत्रिचत्वारिंशत्यनुवाकभाष्यं समाप्तम् ॥ ४३ ॥

मूलम्—मेधां मयि इन्द्रोददातु मेधां देवी सरस्वती मेधां मे अश्विनौ देवावाधत्तां । पुष्करस्रजौ । अप्सरासु यामेधा गन्धर्वेषु च यन्मनः । दैवी मेधामनुष्यजा सामां मेधासुरभिर्जुषताम् ॥ ४४ ॥

भाष्यम्—मेधां मइति ॥ इन्द्रस्सरस्वती पद्ममालालंकृताशिवनौ । देवौ । एते शिवभक्ताश्च । शिवज्ञानाकुलमेधां प्रयच्छन्त्वित्यर्थः । अप्सरासु । अप्सरस्वित्यर्थः । यन्मनः । यामेधा । अप्सरस्सुगन्धर्वेषुच । देवेषु मनुष्येषु च विद्यमानानां सुरभिः । श्रेष्ठाशिवज्ञानानुकूलेत्यर्थः । मेधा । ज्ञानशक्तिः । मां जुषतां । प्राप्नोत्वित्यर्थः ।

इति चतुश्चत्वरिंशत्यनुवाकभाष्यं समाप्तम् ॥ ४४ ॥

मूलम्—ब्रह्महेतुमां । मधुमेतुमां । ब्रह्म । मेवमधुमेतुमां । यास्ते सोमप्रजावत्सोभिसो अहं । दुस्स्वप्नहं दुरुष्वह । यास्ते सोमस्तान्प्राणान् जुहोमि ॥ त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । ब्रह्महत्यां वा एतेघ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति ते सोमं प्राप्नुवन्ति ॥ आसहस्रात्पङ्क्तिं पुनन्ति ॐ ॥४५॥

भाष्यम्—एवं मेधाप्रार्थनमुक्त्वा । परशिवस्यशक्तेश्च प्राप्तिं प्रार्थ्यमानमनुवाकत्रयमुपदिशति ॥ ब्रह्महेत्विति ॥..........॥ ब्रह्म । परशिवः । मा । तच्छक्तिश्च । मां । एतु । प्राप्नोतु । मधुमा । मोक्षलक्ष्मीः । मां एतु । ब्रह्म । शिवः । मा । ज्ञानशक्तिः । मधुमा । मोक्षलक्ष्मीश्च । मामेतु । मनसिनित्यं सन्निधत्तामित्यर्थः । परशिवानन्दानुभवमेव मोक्षलक्ष्मीरितिज्ञेयं । "नशिवेन विनाशक्तिर्नदेव्या च विना शिवः । नानयोरन्तरं किंचिच्चन्द्रचन्द्रिकयोरितिवचनात्,,॥ शिवशक्त्योरुभयोरिति प्रार्थना।समीचीना । एतेन ब्रह्मणः सविशेषत्वमुक्तं भवति । यास्ते सोमेति ॥ सौति ब्रह्मविष्ण्वादीनुत्पादयतीति सोमः । शिवः । ब्रह्मविष्णुरुद्रास्ते सम्प्रसूयन्तेति श्रुतेः । हे सोम । याः । प्रजाः । ताः सर्वास्ते । तव शेषभूता इत्यर्थः । "यथा सुदीप्तातात्पावकाद्विस्फुलिङ्गा इति श्रुतेः ,, । सोहंते । अभि । अभिमतवत्सः । वत्सवत्पोष्य इत्यर्थः । दुस्स्वप्नेति । त्वं दुःस्वप्नदोषाणांहन्ता । दुरदृष्टानां स्वहा । स्वं । धनं । हन्तीतिस्वाहा । उहतिनिश्चयार्थकः । यास्ते सोमहति ॥ हे सोम हे शिव । याः । ये । लिङ्गव्यत्ययश्छान्दसः । तान् । प्राणानिन्द्रियाणि च । ते ।

त्वयि । विभक्तिव्यत्ययश्छान्दसः । जुहोमि । होमं करोमि । कायेन वाचा मनसा इन्द्रियैर्वा यत् करोमि । तत्सर्वं परशिवाय समर्पयामीति भावः । त्रिसुपर्णमिति त्रिसुपर्णशब्दितमेतदनुवाकत्रयं गुरुदक्षिणायाचनान्तरेण । कृपयानिस्पृहो वदेदित्युक्तरीत्या । कृपापारवश्येन । ब्राह्मणमध्यापयति । तेसोमं शिवं । प्राप्नुवन्ति । ओं । ओङ्कारात्मकं शिवमित्यर्थः ॥ शिष्टंस्पष्टं ।

इति पंचचत्वारिंशत्यनुवाकभाष्यं समाप्तम् ॥

मूलम्—ब्रह्ममेधया । मधुमेधया । ब्रह्ममेवमधुमेधया । ब्रह्ममेधवा । मधुमेधवा । ब्रह्ममेव मधुमेधवा ॥ ४६ ॥

भाष्यम्—ब्रह्ममेधयेति ॥ ब्रह्म । शिवः । मेधया । सुज्ञानानुकूलबुध्या । संयोजयत्वितिशेषः । मधुमेधया । मधु । तदानन्दशक्तिः । ब्रह्ममेवमधुमेधया । मधु । आनन्दरूपं ब्रह्म । शिवः । मेव । तच्छिवच्छक्तिश्च । मेधया । संयोजयत्वित्यर्थः ॥ मेधवा । मेधयेत्यर्थः । वर्णव्यत्ययश्छान्दसः । आदराद्विरुक्तिः । यद्वा । मेधाः । यज्ञः । तां वातिगमयतीति । मेधवाः । सुपां सुलुगितिलुक् । शिवज्ञानहेतुभूतयज्ञादिकर्मानुष्ठापकः । मधुमेधवा । परशिवानन्दानुभवहेतुभूत अन्तरज्ञानानुष्ठापकः । ब्रह्ममेव मधुमेधवा । सर्वव्यापकपरशिवतत्वानुभवानुकूलब्रह्माण्डयज्ञानुष्ठापकः ॥ इतिकर्तृविवक्षेतिकेचिद्वदन्ति ।

इतिषट्चत्वारिंशत्यनुवाकभाष्यम् ॥ ४६ ॥

मूलम्--ब्रह्मदेवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणां । श्येनोगृध्राणां । स्वधितिर्वनानां सोमः पवित्रमत्येतिरेभन् ॥ हँसशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योम सदब्जागोजा ऋतजा अद्रिजाऋतं बृहत् । यइमन्त्रिसुपर्णमयाचितं ब्राह्मणायदद्यात् ॥ वीरहत्यां वा एतेघ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति ते सोमं प्राप्नुवन्ति । आसहस्रात्पङ्क्तिं पुनन्ति ॐ ॥ ४७ ॥

भाष्यम्--ब्रह्मदेवानामिति ॥ हँसश्शुचिषदिति इमौ मन्त्रौ पूर्वमेव व्याख्यातौ । वीरहत्यामिति । वीरहवा एषदेवानां योग्निमुद्वासयत इत्युक्तां वीरहत्यामित्यर्थः । अन्यः स्पष्टार्थः । इतिनारायणाख्यकूचिरुद्रे सप्तचत्वारिंशत्यनुवाकभाष्यंसमाप्तम् ॥

मूलम्--प्राणापान व्यानोदानसमाना मेशुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा ॥ वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरेतो बुद्ध्याकूति संकल्पा मेशुध्यन्तां । ज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा ॥ शिरः पाणिपादपार्श्वपृष्ठोदरजङ्घाशिश्नोपस्थापायवोमे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा ॥ ३ ॥ त्वक्चर्ममां

सरुधिरमेधोऽस्थिमज्जामेशुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा ॥ ४ ॥ शब्दस्पर्शरूपरसगन्धामे शुध्यन्तां ज्योतिरहं विरजा विपाप्माभूयासँ स्वाहा ॥५॥ पृथिव्यप्तेजो वाय्वाकाशा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्माभूयासँ स्वाहा ॥ ६ ॥ अन्नमयप्राणमयमनोमयाविज्ञानमयानन्दमयामे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा ॥ ७ ॥ विविट्टि स्वाहा ॥ ८ ॥ घुषोत्काय स्वाहा । उत्तिष्ठ-पुरुषाहरी लोहित पिङ्गलाक्षदेहि दापयितामे शुध्यन्तांज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा ॥ १० ॥ ॐ स्वाहा ॥

इति नारायणे अष्टचत्वारिंशत्यनुवाकः ॥

भाष्यम्—मायापाशनिवृत्तिहेतुभूतपाशुपतदीक्षाङ्गविरजामन्त्राण्याह ॥ ज्योतिरहं विरजाविपाप्माभूयासँ स्वाहा ॥ अहं जीवः । विरजा । शुद्धसत्वप्रधानः । विपाप्मा । अनादिपरिशुद्धः । ज्योतिः । स्वयं प्रकाशमानपरशिवः । भूयासं । भवेयमित्यर्थः ॥ तदर्थमेते मे शुध्यन्तामित्यर्थः । एतच्छुद्धिद्वारानदीसमुद्रवच्छिवस्वरूपो भूयासमितियावत् ॥ ... ... ॥ रेतः। इन्द्रियं । आकूतिः । अभिप्रायः । अन्नमयेत्यादि ॥ आनन्दमयस्य परमात्मनः । शोध्यत्वं च । भजनप्रपदन ॥ ... ॥ लक्षण-

प्रशंसनोपायेन प्रसाद्यत्वं । विविटिष्टि स्वाहा ॥ विशेषणटिष्टि । विविटिष्टिः । व्याप्तिः । ज्ञानव्याप्तिरस्त्वित्यर्थः । घुषः । घोषः । स्वगुणकीर्तनं । तत्र उत्कः । उत्सुकः । परशिवः । तस्मै स्वाहा ॥ हरिं लोहितपिंगलाक्ष ॥ चन्द्राग्निसूर्यनेत्र पुरुषा । हे शिव दीर्घश्छान्दसं त्वमुत्तिष्ठ ॥ मद्रक्षणजागरूकोभव । कैलासान्निरत्यमद्बुद्धि प्रविवेशेत्यर्थः । देहि । त्वद्विषयकज्ञान-शक्त्यादिकं देहि । त्वध्यानहेतुभूताएतेसम्यक्परिशुद्धाभव-न्त्वित्यर्थः ॥ ॐ स्वाहा । ॐ कारात्मकसदाशिवाय । स्वाहा । शिवोमे अस्तु सदाशिवोमितिश्रुतेः ॥ इत्यष्टचत्वारिंशत्यनुवाक-भाष्यं समाप्तम् ॥

मूलम्—सत्यं परं परं सत्यं सत्येन न सुवर्गाल्लो-
काच्यवन्ते कदाचन । सताहि सत्यं तस्मा-
त्सत्ये रमन्ते ॥ १ ॥
तप इति तपो नाशनात्परं यद्धि परं तप-
स्तदुर्द्धर्षं । तद्दुराधर्षं । तस्मात्तपसि
रमन्ते ॥ २ ॥
दम इति नियतं ब्रह्मचारिणः । तस्माद्दमे
रमन्ते । शम इत्यरण्ये मुनयस्तस्माच्छमे
रमन्ते ॥
दानमिति सर्वाणि भूतानि प्रशंसन्ति ।
दानान्नातिदुष्करं तस्माद्दाने रमन्ते ॥
धर्म इति धर्मेण सर्वमिदं परिगृहीतं ।
धर्मान्नाति दुश्चरं । तस्माद्धर्मे रमन्ते ॥

प्रजन इति भूयांसस्तस्माद्भूयिष्ठाः प्रजायन्ते ॥ तस्माद्भूयिष्ठाः प्रजनने रमन्ते ॥ अग्नय इत्याह तस्मादग्नय आधातव्या अग्निहोत्रमित्याह तस्मादग्निहोत्रे रमन्ते॥ यज्ञ इति यज्ञोहि देवानां यज्ञेनहि देवा दिवंगतास्तस्माद्यज्ञे रमन्ते ॥ मानसमिति विद्वांसस्तस्माद्विद्वांस एव मानसे रमन्ते ॥ न्यास इति ब्रह्महि ॥ परः परोहिब्रह्मा । तानि वा एतान्यपराणि तपांसि न्यासएवात्यरेचयत् ॥ य एवं वेदेत्युपनिषत् ॥ इति नारायणे एकोनपञ्चाशदनुवाकः ॥ ४९ ॥

भष्यम्—सत्यंपरमिति ॥ ब्रह्मविद्यायाः सत्यं तप आदीनि साधनान्युपवर्णयन् । सन्यासशद्बितसर्ववासनात्यागएव सर्वोत्कृष्टः । तच्चतुर्मुखाद्यभिमतमिति । प्रतिपादयितुमुपक्रमते ॥ सत्यमिति । सत्यं । सत्यवाक्यं । सतां । सत्पुरुषाणां । कदाचन । सर्वकालमित्यर्थः । परं । उत्कृष्टं । सत्यं परं । सर्वातिशयं सत्यमित्यर्थः । आदराद्विरुक्तिः । सत्यशीलाः सत्पुरुषाः । सत्येन सुवर्गाल्लोकात् । स्वर्गादिलोकात् । न च्यवन्ते ॥ च्युता न भवन्तीत्यर्थः । सत्यं । सत्यशीलत्वं । कदाचन । निरतं । सत्यमेवेत्यर्थः । तस्मात् । सत्पुरुषाः । सत्ये । सत्यवाक्ये । रमन्तेक्रीडन्ति । सर्वदा सत्यवृत्तये । भवन्तीत्यर्थः । अनशनादिव्रततपःशीलाः । तस्मात्सत्यसम्भाषणात् । तपः । अशनाभावरूपं यत्तपः । तत् । दुर्धर्षमिति कर्तुमशक्य-

मिति ॥ वदन्ति । उच्यन्ते । तस्मात् । कर्तुमशक्यत्वात् । दुष्करे पञ्चाग्निमध्ये । तपसि । रमन्ते । पञ्चाग्निमध्ये तपः कुर्वन्तीत्यर्थः ॥ दमइति नियतं ब्रह्मचारिणः । इति ब्रह्मचारिणः । वटुकाः ब्रह्मणिचरन्तीति ब्रह्मचारिणः । सदावेदाभ्यासका इत्यर्थः । उत । शिवज्ञानिनोवा । दमः । बाह्येन्द्रियनिग्रहः । त्वगादिदशेन्द्रियनिग्रह इत्यर्थः । नियतं ॥ नियमेन तस्यबाह्येन्द्रियः विग्रहः कर्तव्यमित्यर्थः । तस्माद्ब्रह्मचारिणः दमे रमन्ते । अयमेव ब्रह्मज्ञानसाधनमिति तस्मिन् रमन्त इत्यर्थः । प्रवर्तन्त इतियावत् । मुनयः । परमेश्वरचरणसरसिज ध्यानशीलाः । तस्माद्दमात् । शमः । अन्तरिन्द्रियनिग्रहः ॥ अधिकमिति । अतिशयमिति । अरण्ये । जनाभावप्रदेशे । शमस्याधिकत्वाच्छमे रमन्ते । एतदेव मुख्यसाधनं ब्रह्मज्ञानस्येति तस्मिन्विचरन्तीत्यर्थः । दानमिति सर्वाणि भूतानि दानं । परस्मै द्रव्यदानं । अन्तरिन्द्रियनिग्रहादधिकमिति प्रशंसन्ति । दानाद्द्रव्यंदानात् । अतिदुष्करं । असाध्यं । कार्यं नास्ति । द्रव्येण सर्वकार्याणि । सुसाध्यानि भवन्तीत्यर्थः । तस्मात्सत्पुरुषा दाने रमन्ते । अयमेव सर्वसाधनमिति । दानशीला भवन्तीत्यर्थः । स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वपादकत्वं । दानस्य लक्षणमित्यर्थः । धर्म इति । धर्मेण इदं सर्वं पूर्वजन्मकृत धर्मद्वारा वित्त कलत्र पुत्रक्षेत्रादिकं सर्वं परिगृहीतं । लब्धमित्यर्थः । तस्मात् । धर्मात् । अतिदुष्करं । अत्यन्तदुष्करं । कार्यं नास्तीत्यर्थः । तस्मात् । सर्वकार्यसमर्थकत्वात् । सत्पुरुषाः । धर्मे रमन्ते । अयमेव सर्वसाधनमिति धर्मे रमन्त इत्यर्थः । सञ्चरन्तीति भावः । पात्रापात्रविशेषेण दीयमानमन्नादिकं धर्मशब्दार्थः ॥ भूयिष्ठाः । विशेषज्ञानिनः । प्रजननः पुत्रपुत्रिकासन्तानवर्गः । भूयास इति अधिकबहुवचनं सर्वाति-

शयसूचनार्थं । तस्मात् । धर्मात् । पुत्रपुत्रिकासन्तानवर्गः । अधिक इति । प्रजाः । प्रजायन्ते । पुत्रपुत्रिकादिप्रजाः । जनयन्तीत्यर्थः । तस्मात्प्रजनने रमन्ते । अयमेव परमलाभइति सन्तानप्रयत्नवन्तो भवन्तीत्यर्थः । अग्नय इत्याह ॥ तस्मात् सन्तानात् । अग्नयः । गार्हपत्यादयः । अधिका इति श्रेष्ठाइति । आधातव्याः । उपासितव्या इत्यर्थः । तदुपासनं कर्तव्यमिति वदन्तीति भावः । अग्निहोत्रमधिकमित्याह ॥ तस्माज्ज्ञानिनो अग्निहोत्रे रमन्ते ॥ देहात्मविलक्षणज्ञानिनो अग्निहोत्रकरणे सञ्चरन्तीत्यर्थः । यज्ञ इति । यज्ञः । ज्योतिष्टोमादिकं । देवानां । इन्द्रादिदेवानां । प्रियः ॥..............................॥

यज्ञेनहि । यज्ञेनखलु । देवाः । यज्ञफलेनखलु । दिवंगताः । स्वर्गं गताः ॥ तस्मात् । स्वर्गप्राप्तिहेतुत्वाद्यज्ञस्य । कर्मनिष्ठाः । यज्ञेरमन्ते । देहव्यतिरिक्तात्मज्ञानिनः । यज्ञशीला भवन्तीत्यर्थः । विद्वांसः । परशिवज्ञानिनः । मानसं । परशिव पादारविन्दमननं ॥ चिन्तनमित्यर्थः । ततो यज्ञादिकर्मणः । अधिकमितिमन्यन्ते । तस्माद्विद्वांसः । परशिवज्ञानिनः । प्राणलिङ्गानुसन्धानकुशला इत्यर्थः । मानसे परमेश्वर पादारविन्दचिन्तन एव । रमन्ते । वर्तन्तेत्यर्थः । सदाप्राणलिङ्गानुसन्धानप्रवर्तनशीला भवन्तीतियावत् । न्यास इति ब्रह्म । ब्रह्माहिपरः । परोहि । ब्रह्मा परब्रह्मशिव इत्यर्थः ॥ सः ॥ न्यासः । सर्ववासनात्यागविशिष्ट शिवाधीनचित्तवृत्तिः । स एव निराभाराश्रमः । परः । उत्कृष्ट इति । ब्रह्मवा । चतुर्मुखः । शिवोवा । अभिमतः खलु । ब्रह्माहिपरः । परोहि ब्रह्मेति द्विरुक्तिः । शिवस्य परशिव ब्रह्मत्व सूचनार्थं । तानि पूर्वोक्तानि । एतानि । सत्यादीनि । तपांसि । अपराणि कर्माणि । एतत् । पदं । कर्म । न्यास एव । सर्ववासनात्यागविशिष्ट

शिवाधीनचित्तवृत्तिरेव । अत्यरेचयत् ॥ सत्यादीनितपांसि अतिक्रान्त इत्यर्थः ॥ मोक्षविषये सर्ववासनात्यागविशिष्ट-शिवाधीनचित्तवृत्तिरेव सर्वोत्कृष्टसाधनमितियावत् ॥ यद्वा । न्यासशब्दस्य । अनवरत परशिवचिन्तनरूपभक्तिर्वा । स्यात् । यः । एवं । यः शिवोपासकः । मोक्षस्य सर्ववासनात्यागविशिष्ट-शिवाधीनचित्तवृत्तिः । अनवरतपरशिवचिन्तनभक्तिर्वा । मुख्यसाधनमितिवेद । जानाति । तत् । उपनिषत् । एतदनु-वाकप्रतिपादितरहस्यमित्यर्थः । उपरितिष्ठतीत्युपनिषत् । सर्वातिशयरहस्यमिति भावः ॥ इतिशब्दोनुवाक समाप्तिबोधकः ॥ इति तैत्तिरीयान्तर्गतनारायणे एकोनपञ्चाशदनुवाकभाष्यम् ॥ ४९ ॥

मूलम्—प्राजापत्यो हारुणिस्सुपर्णेयः । प्रजापतिं पितरमुपससार । किं भगवन्तः परमं वदन्तीति तस्मै प्रोवाच ॥ सत्येन वायु-रावाति सत्येनादित्यो रोचते । दिविसत्यं वाचः प्रतिष्ठा सर्वं सत्ये सर्वं प्रतिष्ठितं । तस्मात्सत्यं परमं वदन्ति । तपसा देवा देवतामग्र आयन् । तपसर्षयस्सुवरस्व-विन्दन् । तपसा सपत्नान्प्रणुदामारातीं स्तपसि सर्वं प्रतिष्ठितं तस्मात्तपः परमं वदन्ति ॥ २ ॥ दमेन दाताः किल्मिषमव-धून्वन्ति दमेन ब्रह्मचारिणस्सुवरगच्छन् ॥ दमो भूतानां दुराधर्षं दमे सर्वं प्रतिष्ठितं । तस्माद्दमः परमं वदन्ति ॥ शमेन शान्ताः

शिवमाचरन्ति । शमेन साकं मुनयोन्वविन्दन् ॥ शमो भूतानां दुराधर्षं शमे सर्वं प्रतिष्ठितं । तस्माच्छमः परमं वदन्ति दानं यज्ञानां वरूथं दक्षिणा लोके दातारँ सर्वभूतान्युपजीवन्ति । दानेनारातीरपानुदन्त । दानेन द्विषन्तो मित्रा भवन्ति । दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्ति । धर्मो विश्वस्य जगतः प्रतिष्ठा । लोके धर्मिष्ठं प्रजा उपसर्पन्ति । धर्मेण पापमपनुदन्ति । धर्मे सर्वं प्रतिष्ठितं । तस्माद्धर्मं परमं वदन्ति । प्रजननं वै प्रतिष्ठा । साधु प्रजायास्तन्तुं तन्वानःपितॄणामनृणोभवति । तदेवतस्यानृणं। तस्मात्प्रजननं परमं वदन्ति। अग्नयो वै त्रयीविद्या देवयानः पन्थाः गार्हपत्यरुक् पृथिवी । रथन्तरमन्वाहार्यं पचनो यजुरन्तारिक्षं वामदेव्यमावहनीयस्सामसुवर्गो लोको बृहत्तस्मादग्नीन् परमं वदन्ति । अग्निहोत्रं सायं प्रातर्गृहाणां निष्कृतिस्स्विष्टं सुहुतं यज्ञक्रतूनां प्रायणं । सुवर्गस्य लोकस्य ज्योतिस्तस्मादग्निहोत्रं परमं वदन्ति ॥ यज्ञ इति । यज्ञोहि देवानां

यज्ञे हि देवा दिवंगताः । यज्ञेनासुरान-पानुदन्त । यज्ञेन द्विषन्तो मित्रा भवन्ति । यज्ञेन सर्वं प्रतिष्ठितं तस्माद्यज्ञं परमं वदन्ति ॥ मानसं वै प्राजापत्यं पवित्रं । मानसेन मनसा साधु पश्यति । मानसा ऋषयः प्रजाः असृजन्त । मानसे सर्वं प्रतिष्ठितं । तस्मान्मानसं परमं वदन्ति । न्यास इत्याहुर्मनीषिणो ॥ ब्रह्माणं ब्रह्म विश्वः ॥ कतमः स्वयम्भूः प्रजापतिस्संव-त्सर इति संवत्सरोसावादित्यो य एष आदित्ये पुरुषस्स परमेष्ठी ब्रह्मात्मा याभि-रादित्यस्तरति रश्मिभिः ताभिः पर्जन्यो वर्षति । पर्जन्येनौषधिवनस्पतयः प्रजायन्त ओषधिवनस्पतिभिरन्नं । भवत्यन्नेन प्राणाः प्राणैर्बलं बलेन तप ॥स्तपसा श्रद्धा श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा शान्तिःशान्त्या चित्तं चित्तेनस्मृतिं स्मृत्या-स्मारं स्मारेण विज्ञानं विज्ञानेनात्मानं वेद-यति तस्मादन्नं दद स्सर्वाण्येतानि ददात्यन्ना त्प्राणा भवन्ति भूतानां प्राणैर्मनो मनसश्च विज्ञानं विज्ञानादानन्दो ब्रह्मयोनिस्सवा

एष पुरुषः । पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतंपृथिवीचान्तरिक्षंचद्यौश्चदिशश्चावान्तर-दिशश्च सवै सर्वमिदं जगत ॥ स च भूतं स च भव्यं । जिज्ञासुरुत क्लृप्तरुत जायिष्ठा श्रद्धा सत्यो महास्वान् ॥ तपसो वतिष्ठा-ज्ज्ञात्वातमेवं मनसा हृदा च ॥ भूयोन मृत्युमुपयाति विद्वान् तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः ॥

इति नारायणे पञ्चाशादनुवाकः ॥ ५० ॥

भाष्यम्—प्राजापत्योहरुणि रिति ॥ प्राजापत्यः । अरुणा-ख्यप्रजापतेरपत्य अरुणिः ॥ अपत्यार्थे इनिप्रत्ययः ॥ सुपर्णेयः । प्रजापतिः । पितरमुपससार शिवज्ञानसाधने सर्वातिशयसा-धनं किमिति प्रश्नार्थं विधिवत्पितृभूताचार्यसन्निधिमुप-जगाम । किं भगवन्तः । परमं वदन्तीति हे भगवन्तः । आचार्याः मोक्षसाधनं परमं उत्कृष्टं किमिति भवादृशाः । वदन्ति ॥ तत्सा धनं मह्यं त्वं ब्रूहीति प्रश्नमकरोत्सः । आचार्यः । तस्मै । शिष्याय । प्रोवाच । प्रकृष्टेन उवाच । किमिति । सत्येन वायु रावातीत्यादि ॥................ ॥ दिवि-अन्तरिक्षे । सत्येन । सत्पुरुषाणां सत्यवाक्यस्वभावेनैव वायुरावातिखलु । आसम-न्ताज्ज्वलति आदित्यः सूर्यः । सत्येनखलु रोचते । भासते । सत्य वाचः । सत्यवाक्छीलाः ॥ दिविप्रतिष्ठाः । नक्षत्ररूपेणान्तरिक्षे स्थिता इत्यर्थः । सत्ये सर्वं प्रतिष्ठितं । सत्यवाक्यविशिष्टे पुरुषे सर्वं स्थितं । तस्य सर्वं सुसाध्यं भवतीत्यर्थः । तस्मा-

त्सत्यं । सत्यवागवृत्तित्वं परमं वदन्ति । सर्वातिशयसाधनमिति वदन्ति ॥ सन्त इत्यर्थः । तपसा देवा देवतामग्र अयन्निति देवाः । इन्द्रादयः । अग्रे पूर्वं । तपसा देवतामायन्निति । देवत्वमगमन्नित्यर्थः । ऋषयः । विश्वामित्रादयः । तपसा । सुवर्लोकं । अन्वविन्दन् । प्राप्नुवन्तः । तपसा । सपत्नान् । प्रणुदामारातीनिति आरातीन् । सपत्नानितिपदद्वयेन । अत्यन्तशत्रूनित्यर्थः । तपसा । प्रणुदां नाशयन्तीत्यर्थः । तपसि सर्वं प्रतिष्ठितं । तपसा सर्वं साध्यं भवतीत्यर्थः। तस्मात् कारणात् तपः । परम वदन्ति । तपस्विन इत्यर्थः । दमेनेति । ततोऽप्यधिकः । बाह्येन्द्रियनिग्रहोमुख्यमिति ब्रह्मचारिणः ॥ वदन्तीत्याह॥दमेनति।दान्ताः।बाह्येन्द्रियनिग्रहनिरताःब्रह्मचारिणः। ब्रह्मणि शिवे वेदे वा चरन्तीति ब्रह्मचारिणः । दमेन किल्मिषं पापं । अवधून्वन्ति ॥ धूञोकम्पने ॥ चालयन्ति । नाशयन्तीति भावः । दमेन ब्रह्मचारिणः ॥ सुवर्लोकं । स्वर्गलोकं । आगच्छन् । अगमन् । दमः । भूतानां दुराधर्षं । सर्वेषां बाह्येन्द्रियनिग्रहः । कर्तुमशक्य इत्यर्थः । दमे सर्वं प्रतिष्ठितमिति । दमस्सर्वकार्यसाध्यविषये । मुख्यसाधनं भवतीत्यर्थः । तस्माद्दमः परमं वदन्ति ब्रह्मचारिणो दमं मुख्यमिति वदन्तीत्यर्थः ॥ मुनयः । अन्तः प्राणलिङ्गानुसन्धातशीलाः । शममन्तरिन्द्रियनिग्रहं । सर्वोत्तमं वदन्तीत्याह । शमेन शान्ता इति । शान्ताः । अन्तर्लिङ्गानुसन्धाननिपुणा मुनयः । शमेन अन्तिरिन्द्रियनिग्रहेण । मुनयः । शिवं । स्वयं शिवाराधकत्वात्सर्वेषां शिवमाचरन्ति । मंङ्गलं कुर्वन्तीत्यर्थः । नाकं । चित्कैलासं गच्छन्ति । शमो भूतानां दुराधर्षं । कर्तुमशक्यमित्यर्थोमे सर्वं प्रतिष्ठितं । शमस्तु सर्वकार्यसाधकमित्यर्थः । तस्माद्धेतोः । मुनयः । वामदेवशुकदुर्वासादयः । शमः । अन्तरिन्द्रियनिग्रहः ।

परमं । सर्वातिशयसाधनमितिवदन्ति । दातारः । तस्माच्छ्रेमाद्दानं सर्वोत्तमंसाधनं वदन्तीत्याह । दानं वरूथमिति दक्षिणाः पुरुषाः । सर्वस्वदक्षिणापूर्वकयज्ञादिकर्मनिष्ठाः । दानं । वरूथं । श्रेष्ठं । मन्यन्ते । दातारं । सर्वभूतान्युपजीवन्ति । दातारमनुसृत्य सर्वभूतानि जीवन्तीत्यर्थः । दानेनाराति शत्रूनपानुदन्ति । दूरं चालयन्तीत्यर्थः। दानेन द्विषन्तो मित्राभवन्ति । दानेन शत्रवोपिसुहृदो भवन्ति । दाने सर्वं प्रतिष्ठितं । तस्माद्धेतोः । परमं वदन्ति । दानाद्धर्मं परमं वदन्तीत्याह । धर्मो विश्वस्यजगतः । प्रतिष्ठेति । विश्वस्य जगतः सर्वप्रपञ्चस्य धर्मः । अन्नदानादिकदानं । प्रतिष्ठा । मुख्यकारणं । लोके विद्यमानप्रजाः । धर्मिष्ठं जनं । उपसर्पन्ति । स्तोत्रं कुर्वन्तीत्यर्थः । धर्मेण पापमपनुदति । धर्मिष्ठोजनः । धर्मेण स्वकृतदुष्कृतं नाशयतीत्यर्थः । धर्मे सर्वं प्रतिष्ठितं । सर्वकार्यसाधनं भवन्तीत्यर्थः । तस्मद्धेतोः । धर्मं सर्वोत्कृष्टसाधनमिति वदन्ति । तस्मात्प्रजननं ॥ धर्मात्पुत्रपुत्रिकासन्ततिरधेकेतिसन्तानबन्तो वदन्तीत्याह । प्रजननं वै प्रतिष्ठेति । साधु प्रजननं । शिवभक्तिमत्पुत्रसन्तानं * ॥ * प्रतिष्ठा । उत्तमलोकप्राप्तिहेतुरित्यर्थः ॥ प्रजायास्तन्तुं तन्वानः । अविच्छेदसन्ततिं कुर्वाणः । पितॄणामनृणोभवति । पितृऋणविमुक्तो भवति । तदेव । अविच्छिन्नसन्तानमेव । तस्यः पितुः । अनृणं । ऋणाभावः । तस्मात् । पितृऋणाभावादेव प्रजननं । शिवभक्तियुक्तसन्तानसमृद्धिरेव । परमं । सर्वोत्कृष्टमिति वदन्ति । अग्नयो वैत्रयीविद्या । ऋग्यजुः सामवेदात्मकाः । गार्हपत्यः । एतन्नामकाग्निः । देवयानः । पन्थाः । अर्चिरादिलोकप्रापको मार्ग इत्यर्थः । ऋक् । पृथिवी । ऋक् । ऋग्वेदः ॥ रूपः । पृथिवी । भूलोकस्वरूपः । भूलोकप्रापक इत्यर्थः । रथन्तरं । रथन्तरना-

मकनाम्ना स्तुतिः । क्रियते । अन्वाहार्यवचनः । दक्षिणाग्निः । यजुः । यजुर्वेदस्वरूपः । अन्तरिक्षं । अन्तरिक्षलोकप्रापकः । वामदेव्यं । एतन्नामकनाम्नास्तुतिः । क्रियते । आहवनीयं । एतन्नामकाग्निः । साम । सामवेदस्वरूपः । सुवर्गोलोकः । स्वर्गलोकप्रापकः । बृहत् । बृहत्साम । एतन्नामकनाम्नास्तुतिः । क्रियते । तस्मादग्नीन् । गार्हपत्यादीन् । परमं वदन्ति । उत्तम-लोकसाधनानीतिवदन्ति । गृहाणां गृहीणां । सायं प्रातः काले सुहुतं । स्विष्टं । होमादिकं । निष्कृतिः पापप्रायश्चित्तिर्भवति । यज्ञक्रतूनां । प्रायणं । प्रकृष्टगतिः । सुवर्गस्य लोकस्य । ज्योतिः । दीपवत्प्रकाशकोग्निरित्यर्थः । तस्मादग्निहोत्रं परमं वदन्ति । यज्ञ इति । देवानां यज्ञः । यजदेवपूजायामितिधातुः । सर्वदेवानांपूजा हेतुः । यज्ञेन हि देवाः । दिवंगताः । यज्ञेन द्विषन्तो मित्रा भवन्ति शत्रवो सुहृदो भवन्ति । यज्ञेन । सुरानपा-नुदन्ति । यज्ञकरणेन असुरान्पलायितान्कुर्वन्ति । यज्ञे सर्वं प्रतिष्ठितं । यज्ञकरणेन सर्वं सुसाध्यं भवतीत्यर्थः । तस्मा-द्धेतोः । यज्ञं । परमं । सर्वातिशयमिति वदन्ति । मानसं वै प्राजापत्यं । प्रजानां पशूनां ब्रह्मविष्णूनां पतिः । प्रजापतिः । शिवः । तत्सम्बन्धियज्ज्ञानं तत् प्राजापत्यं भवति । ब्रह्मवि-ष्णुजनकपरशिवध्यानविषयकज्ञानमित्यर्थः । मानसं । मनसा प्राणलिङ्गानुसंधानं पवित्रं । सर्वस्मात्पूर्वोक्तात्पवित्रं । मान-सेन अन्तःप्राणलिङ्गानुसन्धानविशिष्टमानसेन । ऋषयः । अग-स्त्यादयः । साधुयोग्यं । पश्यति । परशिव तत्वरूपभावलिङ्गं पश्यन्तीत्यर्थः । सदान्तःप्राणलिङ्गानुसन्धानकुशलाः । पश्चिम चक्रस्थितभावलिङ्गं सम्यक्पश्यन्तीत्यर्थः । मानसाः । तादृ-क्पुरुषाः । ऋषयः । गौतमदधीच्यादयः । प्रजाः असृजन्ति । संकल्पमात्रादेव सर्वं सृजन्तीत्यर्थः । मानसे । अन्तर्लिङ्गानु-

सन्धाने । सर्वं प्रतिष्ठितं । तेन सर्वं सुकरं भवति । तस्य सर्वज्ञत्वादिमहिमा च सिध्यतीत्यर्थः ॥ तस्माद्धेतोः । मानसं । अन्तर्लिङ्गानुसन्धानं परमं उत्कृष्टं वदन्ति । न्यास इत्याहुर्मनीषिणः । ब्रह्मविद्वांसः ॥ न्यासः । सम्यकी न्यासः । ईषणत्रयपरित्यागः सन्यासः । निराभाराश्रम इत्यर्थः । उत । सति ब्रह्मणिन्यासः । सन्यासः । सर्ववासनात्यागविशिष्टशिवाधीनचित्तवृत्तिः । ब्रह्माणं शिवसाक्षात्कारं प्रति । मुख्यसाधनमित्याहुः । ब्रह्माविश्वः कतमः स्वयम्भूः । प्रजापतिः संवत्सरइति । एतच्छब्दवाच्यविष्णवाद्यन्तर्यामिणं । परशिवं । सिद्धोपायं । मनीषिण आहुरितिवा । असावादित्यः । संवत्सरः । संवत्सरात्मकः । एष पुरुषः । महापुरुषः शिवः । आदित्ये वर्तते । स एव परमेष्ठी । परमे । हृदयपुण्डरीकाकाशावच्छिन्नपरमाकाशे । तिष्ठतीति परमेष्ठी । हृदयपुंडरीकावच्छिन्नभासमानज्योतिर्लिङ्गस्वरूपक इत्यर्थः । उत महाकैलासवासी वा स्यात् । ब्रह्म । बृहत्वादिगुणयुक्तपरब्रह्मेत्यर्थः । आत्मा । मूर्तित्रयातीतपरमात्मेत्यर्थः । परमात्मा सदाशिवः । शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय इति श्रुतेः । आदित्यप्रसङ्गादन्नदानं प्रशंसति यं श्रुतिः ॥ याभिरादित्य इति । याभिः सूर्यप्रभाभिः ॥ आदित्यस्तपति । भूमौ तापंकरोति । ताभिः । कान्तिभिः । किरणैरित्यर्थः । पर्जन्यः सूर्यो मेघरूपी सन् वर्षति । पर्जन्येन मेघेन । ओषधिवनस्पतयो । वृक्षाद्योषधयः । प्रजायन्ते । उत्पद्यमाना भवन्ति । ओषधिवनस्पतिभिः । अन्नं भवति । अन्नंमुत्पन्नं भवति । अन्नपरिणामं शरीरमुत्पन्नं भवतीत्यर्थः । अन्नेन प्राणाः । अन्नपानादिभिः । प्राणाःस्वव्यापारप्रवर्तका भवन्तीत्यर्थः । प्राणैः । बलं । शरीरबलं । शरीरबलेन तपो भवति । देहबलेन तपः सिध्यतीत्यर्थः ।

तपसा । श्रद्धा । आस्तिक्यबुद्धिः । गुरुचरभक्तेषु विश्वासो वा भवति । श्रद्धया मेधा । ग्रहणधारणसमर्था बुद्धिर्भवति । मेधया मनीषा भवति । श्रोतुमिच्छाभवति । मनीषया । तादृशपरशिवकथाश्रवणेन । मनो भवति । मननं । निर्मलान्तःकरणं वा भवति । मनसा । शान्तिर्भवति । शान्त्याचित्तं भवति । अन्तरिन्द्रियनिग्रहेण परशिवाधीनचित्तवृत्तिर्भवतीत्यर्थः । चित्तेन स्मृतिर्भवति । परमेश्वरगुणकथनस्मृतिर्भवति । स्मृत्या स्मारं भवति । वाचा अनवरतपरशिवनामचिन्तनं भवति । तेन । विज्ञानं । शिवतत्वविज्ञानं भवति । विज्ञानेन । आत्मानं । स्वहृदयान्तर्वर्तिपरशिवंसाक्षात्कुर्वन्ति । तस्मात्सूर्यान्तर्वर्तिपरशिवः । सर्वेभ्योन्नंदापयन् । एतानिपूर्वोक्तानि । सर्वाणि ददाति । अन्नाद्भूतानां प्राणाः । भवन्ति । उत्पन्ना भवन्ति । प्राणैः मनः । भवति । "मनएव मनुष्याणां कारणं बन्धमोक्षयोरित्युक्तरीत्या" सर्वकार्यहेतुत्वात्प्राणेभ्योमन उत्कृष्टमित्यर्थः । मनसः विज्ञानं तनुत इति । अन्योन्तर आत्मा विज्ञानमय इति श्रुतेः" । विज्ञानशब्दवाच्यो जीवः । अधिको भवति । विज्ञानात् जीवात् आनन्दः । आनन्दशब्दवाच्यपरमेश्वरः । अधिको भवति । सः । एष महापुरुषः । योनिर्भवति । पूर्वोक्तसर्वेषां कारणं भवति । ब्रह्म । ब्रह्मशब्दवाच्यः । पञ्चधा । सद्योजातादिपञ्चमूर्तीसन् । पञ्चात्मा । पृथिव्यादिपञ्चकान्तर्यामी भवतीत्थः । जिज्ञासुक्लृप्तः । जिज्ञासूनां । शिवोपासकानां । क्लृप्तः । हृदयपुण्डरीकावच्छिन्नतया अङ्गुष्ठमात्ररूपस्सन् साक्षात्कृतो भवति । ऋतजाः । ऋतेन । सत्यव्रतेन । अन्तरूपासनेनवा । जायतेलभ्यतेति ऋतजाः । रयिष्ठाः । रयिः । चिच्छक्तिः । परमाकाश इत्यर्थः । तन्निष्ठ इत्यर्थः । येन सर्वमिदं प्रोत इत्यादि । पृथिवी च ।

अन्तरिक्षं च । आकाशं च द्यौश्च । स्वर्गः । दिशश्च । प्राच्यादि-दिशश्च । अवान्तरदिशाश्च । आग्नेयादि विदिशश्च । भूत-भविष्यद्वर्तमानमिदं जगत् । परमात्मशक्त्युपादत्वेन परमेश्वर शिवएवेत्यर्थः । सत्यः । यः । श्रद्धयायुक्तः । तस्य सत्यः । त्रैकालिकाबाध्यस्वरूपतयाप्रकाशकः । महास्वान् । आकाशादि-कारणत्वात्ततोधिकमहद्गुणयुक्तः। सर्वव्यापकतत्वस्वरूपइत्यर्थः॥ यस्तु । शिवज्ञानिवरिष्ठात्तपसः । तं । परमात्मानं शिवं । हृदा च भक्त्या च । मनसा च । शिवाधीनचित्तवृत्या च । तं । शिवं । एवं । ज्ञात्वा । उपासकलभ्यइति ज्ञात्वा । जानाति । सः विद्वान् । शिवज्ञानी । भूयः । पुनः । मृत्युं । संसाररूप मृत्युं । नोपयाति । नगच्छति । तस्मान्न्यासमेषामतिरिक्तमि-त्याहु । तस्मात् । मोक्षहेतुत्वात् ॥ एषां । सत्यादितपसां । मध्ये । न्यासं । सर्ववासनात्यागविशिष्टशिवाधीनचित्तवृत्ति रूपतपः अतिरिक्तमाहुः । मुख्यसाधनमित्याहुः । शिवतत्व-ज्ञानिनइत्यर्थः । यथाश्रुतयः । "वासानातानवं ब्रह्मन् मोक्ष इत्य-भिधीयते ॥ नमोक्षो नभसः पृष्ठे न पाताले महीतले ॥ सर्वाशा संक्षयश्चेतोमोक्षइत्यभिधीयते । त्यजेद्धर्ममधर्मं च उभे सत्यानृते त्यजेत् । उभेसत्यनृतेत्यक्त्वा येनत्यजसि तत्यज इत्यादयः । स्मृतिः सर्वधर्मान्परित्यज्यमामेकं शरणं व्रज । अहं त्वां सर्व पापेभ्यो मोचयिष्यामि राघव इति शिवगीतायां भगवद्वचनं" ॥

इति पञ्चाशदनुवाकभाष्यम् ॥ ५० ॥

मूलम्—वसुरण्वो विभूरसि प्राणेत्वमसि । सन्धाता । ब्रह्मान्त्वमसि विश्वधृक् । तेजोदास्त्वमस्य-ग्नेर्वर्चोदास्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि

चन्द्रमस उपयामगृहीतोसि ॥ ब्रह्मणेत्वा महस ओमित्यात्मानं युंजीतैतद्वै महोपनिषदं देवानां गुह्यं । य एवं वेद । ब्रह्मणो महिमानमाप्नोति ॥ तस्माद्‌ब्रह्मणो महिमानमित्युपनिषत् ॥

इतिनारायणे एकपंचाशादनुवाकः ॥ ५१ ॥

भाष्यम्—वसुरण्येति । शिवस्तोत्रं शिवोपासकानां प्राप्यत्वं चाह ॥ वसुरण्योसि । वसूनां वस्वादिसर्वदेवतानां । रण्योसि। प्राप्यस्थानमसि । त्रिभूः विशेषेणनवचक्रेषु भवति आविर्भवतीति विभूः ॥ विभुरित्यर्थः । दीर्घश्छान्दसः । सर्वव्यापक इतिवार्थः। प्राणेत्वमसि सन्धाता । प्राणादिसर्वकार्यजनकस्त्वमसीत्यर्थः। "एतस्माज्जायते प्राणोमनस्सर्वेन्द्रियाणि चेति कैवल्ये तथाश्रूयते"॥ हे ब्रह्मन्। हे शिव। विश्वाधृक्। विश्वधारकश्च।विश्वाधिष्ठानमिति यावत्। त्वमसि।अग्नेः तेजोदाः तेजप्रदः। सूर्यस्य वर्चोदाः।कान्तिप्रदश्च । चन्द्रमसः द्युम्नोदाः । कान्तिप्रदश्चत्वमसि । तस्य भासा सर्वमिदं विभातीति श्रुतेः। हे शिव। त्वां । उपयाम। उपासनया प्राप्नुवामि । गृहीतोसि । तथानुगृहीतोसि । त्वांस्वरूपे । नदीसमुद्रवल्लीनं गमितुमनुज्ञां देहीत्यर्थः । महदुपासनया दृष्टोसीतिवार्थः ॥ महसे । महते । ब्रह्मणे । परशिवाय त्वां । तुभ्यमित्यर्थः । त्वत्प्राप्त्यर्थमितियावत् । ओमितिमन्त्रेणापि । आत्मानं युंजीत जललवणवन्न्यायेन पुनरात्मसमर्पणं कर्तव्यमेवेत्यर्थः । एतद्वै-एतद्भेदाभेदसिद्धान्तशिवजीवैक्यन्तु ॥ महोपनिषदं । महोपनिषत्प्रतिपाद्यं । रहस्यं । देवानामपीत्यर्थः ।

थः । एवं । जीवशिवस्योः बद्धदशायां भेदः स्वाभाविकः । मुक्तदशायामभेदश्चलोहरसनदीसमुद्रादिवत्स्वाभाविक इति । वेद । जानाति । सः । पुरुषः । ब्रह्मणः शिवस्य महिमानं ॥ आप्नोति प्राप्नोति शिवस्वरूपो भवतीत्यर्थः ॥ तस्माद्ब्रह्मणो महिमानमाप्नोतीति द्विरुक्तिः ॥ द्वैताद्वैतसिद्धान्त-शिवजीवैक्यमुक्तेः सर्वमुक्त्यतिशयद्योतनार्थं ॥ मूर्तामूर्तशिवतत्वद्वयप्राप्तिबोधकं वास्यात् ॥ इति नारायणे एकपञ्चाशदनुवाकभाष्यम् ॥ ५१ ॥

मूलम्—तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरोवेदिर्लोमानिबर्हिर्वेदश्शिखा हृदयंयूपः। काम आज्यंमन्युः पशुस्तपोग्निर्दमश्शमयिता। दक्षिणा वा घोता। प्राणाउद्गाता । चक्षुरध्वर्युर्मनोब्रह्म ॥ श्रोत्रमग्नीध्रावद्ध्रियते । सा दीक्षा ॥ * * * ॥ यदश्नातितद्धविर्यत्पिबातितत्सोमपानं यद्रमते तदुपसदोयत्संचरत्युपाविशत्युत्तिष्ठति चस्त्रपर्ग्योयन्मुखन्तदाहवनीयो यदस्य विज्ञानं तज्जुहोति यत्सायं प्रातरत्ति तत्समिधो यत्सायं प्रातर्मध्यंदिनं च तानि सवनानि। ये अहोरात्रे ते दर्शपूर्णमासे । ये अर्धमासाश्च मासाश्चते । चातुर्मास्यानि । ये ऋतवस्ते पशुबन्धा।ये संवत्सराश्च परिवत्सराश्च ते अहर्गणास्सर्ववेदसंवाएतत्सत्रं यन्मरणं

तदवभृथँ । एतद्वैजरामर्यमग्निहोत्रं । य एवं विद्वानुदगयनेप्रमीयते। देवानामेव महिमानं गत्वादित्यस्य सायुज्यं गच्छत्यथयो दक्षिणेप्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमससस्सायुज्यं गच्छत्येतौ ॥ वैमूर्या-चन्द्रमसो हर्महिमानौ । ब्रह्मणो विद्वानभिजयति ॥ * * * * ॥ तस्माद्ब्राह्मणो महिमानमाप्नोति--तस्माब्राह्मणो महिमानमित्युपनिषत् ॥

॥ * ॥ इति नारायणे द्विपञ्चाशदनुवाकः ॥ २ ॥

भाष्यम्—तस्यैवं विदुष इति । यज्ञो दानं तपश्चैव पावनानि मनीषिणां ॥ कर्तव्यानीति ये पार्थ निश्चितं मतमुत्तममिति । वीरहवा एषदेवानां योग्निमुद्वा नयतीतिश्रुतिः । अग्निहोत्रादितु तत्कार्या यैवतद्दर्शनादित्यादिस्मृतिसूत्रादिभिश्च ब्रह्मविदुषामपि यज्ञादग्निहोत्रादिकं कर्मस्वप्रयोजनाभावेपि परमेश्वराज्ञा । भंगभयेन यावज्जीवमनुष्ठेयमियुक्तत्वात् । सर्वधात्यक्तुमशक्यत्वाच्च । तत्प्रतिनिधित्वेन ब्रह्मज्ञानिना क्रियमाणस्य आत्महविस्समर्पणरूपयज्ञस्य । प्रसिद्धयज्ञांगवैलक्षण्येन प्राशस्त्यं दर्शयति । तस्यैवं विदुष इत्यादिना—एवं ॥ पूर्वोक्तप्रकारेण । तस्य । अन्तर्ज्योतिलिङ्गानुसन्धाननिपुणस्य । विदुषः । शिवज्ञानिनः । यज्ञस्य यजमानः । आत्मयज्ञस्य । शिवलीनं प्राप्तव्य जीवात्मा यजमानः । कर्तेत्यर्थः ॥ तस्य । पत्नी । भार्या । श्रद्धा । विश्वासबुद्धिः । गुरुचरेश्वरदास्यबुद्धिरेवतस्य भार्या

भवतीत्यर्थः । इध्म । शरीरं ॥ वेदिः । परिष्कृताभूमिः । अग्निप्रतिष्ठापनायोग्यभूमिरित्यर्थः । उरः । वक्षस्थलं । वर्हिः । कुशाः । लोमानि देहास्थिरोमाणि ॥ शिखाः । अग्निज्वालाः । वेदाः । चतुर्वेदाः । यूपः । पशुवन्धनस्तम्भः । हृदयं । चित्तं । बुद्धिर्वा । आज्यं । घृतं । कामः । विषयासक्तिः । पशुः । अग्निष्टोमीयपशुः । मन्युः । क्रोधइत्यर्थः । क्रोधशब्दोलोभादीनांमुपलक्षणं । अग्निहोत्रं । तपः । अन्तःप्राणलिङ्गानुसन्धानरूपतपः । कृच्छ्रचान्द्रायणादिकं वास्यात् । दक्षिणा । मानसिकयज्ञदक्षिणा ॥ शमयिता । सर्वंखल्विदं ब्रह्म । सर्वो वै रुद्र इत्यादि श्रुत्करीत्या । चेतनाचेतनसर्वशिवात्मकज्ञानं । उत समदृष्टिर्वा दक्षिणा स्यात् । यावद्ध्रियते सा दीक्षा । यावज्जीवति । सा दीक्षा । होता । होतृनामक ऋत्विक् । वाक् । वाचइत्यर्थः । प्राणवायुः । प्राणनामकवायुः । ऊर्ध्वनिश्वासवायुरित्यर्थः । उद्गाता । एतन्नामक ऋत्विक् । अध्वर्युः । यज्ञप्रवर्तकऋत्यिक् । चक्षुः । नेत्रेन्द्रियमित्यर्थः । ब्रह्मा । ब्रह्मनामकऋत्विक् । मनः । मानसं अन्तरिन्द्रिमित्यर्थः । अग्निन् । त्रेताग्नयः । श्रोत्रं । श्रोत्रेन्द्रियमित्यर्थः । यदश्नाति यत्पिवति । तत् । अन्नपानादिकं । तस्यविदुषः सोमपानं । उपसदः । उपसन्नामकं कर्म । यद्रमते । क्रीड़तीत्यर्थः । प्रवर्ग्यः । यत् । सञ्चरति । उपदिशति । उत्तिष्ठते च ॥ सः । प्रवर्ग्य इत्यर्थ । यत् । मुखं । भक्षणे साधनं वक्रे । तदावहनीय्यः । तस्य स्थान मित्यर्थः । यदस्यविज्ञानं । अस्य । शिवज्ञानिनः । यत् । विज्ञानं । तत्वताय ज्ञानमस्ति । तत् । जुहोति । होमस्थार्थं । सायं प्रातः । यदन्नमत्ययं । तत् । समिधं । समित् स्थानं ॥ यत् । सायं प्रातर्माध्यंदिनकालाः तानिसवनानि । यज्ञा इत्यर्थः । ये अहोरात्रे वर्तेते । ते

दर्शपूर्णमासौ । दर्शपूर्णमासस्थानीयौ भवतः । अर्धमासाश्चये वर्तन्ते । ते चातुर्मास्यानि चातुर्मास्यस्थानीयानि ॥ ये ऋतवः । वसन्तादयः॥ वर्तन्ते । ते अहर्गणाः तत्क्रतुनियतदिनसमूहइत्यर्थः । आत्मसमर्पणरूपत्वान्मनो यज्ञस्य । सर्ववेदसं । सर्वदक्षिणा· युक्तमेतत्सत्रं । मनोयज्ञइत्यर्थः । यत् । मरणं । अस्य विदुषः । देहत्यागः । तदवभृथं । परिसमाप्तिः । अवभृथस्नानमित्यर्थः । जरामर्यं । जरयावयोहान्या म्रीयते समाप्यत इति जरामर्यं ॥ यावज्जीवमनुष्ठेयमेतन्मानसिकसत्रमित्यर्थः । एतत्प्राणलिङ्गा-राधकानां । ब्रह्मज्ञानिनां । उत्तरायणमरणे । देवलोकादि प्राप्तिपूर्विकादित्यसायुज्यपूर्विका । परशिवप्राप्तिरित्याह । य एवमिति । यः । विद्वान् । आत्मसमर्पणरूपमनो यज्ञं । विजानन् । ज्ञानी । उदगयने । उत्तरायणे । प्रमीयते । मृतिंगतो-भवति । सह विद्वान्देवानां । वायुसूर्यचन्द्र विद्युद्वरुणेन्द्र चतुर्मु खादीनां ॥ महिमानं । तत्तन्महिमानं । तत्सदृशमहिमान मित्य-र्थः । गत्वा । वचन्महिमानं प्राप्यतत्तल्लोकस्थितभोगा ननुभूय ततः सूर्यस्य सायुज्यं गच्छति । आदित्येनः सह सञ्चरति । आदित्यतुल्यो भवतीत्यर्थः । अथयोदक्षिणे प्रमीयत इति । यः शिवज्ञानी । दक्षिणे म्रियते । मृतिंगतो भवति । अथसः । अनन्तरं स शिवज्ञानी । पितृणामेवमहिमानं गत्वा । वसुरुद्रादि पितृदेवतागणसदृशमहिमानं लब्ध्वा । तल्लोकेषु किञ्चित्कालं स्थित्वा ॥ चन्द्रमसः सायुज्यँ गच्छति । चन्द्रतुल्यकान्तिमान्भूत्वा चन्द्रेण सह सञ्चरतीत्यर्थः । एतावै । उत्तरायणदक्षिणायन कालमृतौ ॥ विदुषावपि । सूर्याचन्द्रमसोः ॥ महिमानौ । तत्सदृशमहिमायुक्तौ । भवतः । ब्राह्मणो विद्वानभिजयति ॥ ब्रह्मशिवं ॥ अन्तः जानातीतिब्राह्मणः । प्राणलिङ्गावधानीत्यर्थः॥ सर्वान् लोकान् । अभिजयति । तिरस्करोतीत्यर्थः । तृणीकृत

ब्रह्मपुरन्दराणां । किंदुष्कृतं शंकरकिंकराणमित्यभियुक्तोक्तेः । तत्तल्लोकस्थितान् भोगान् । यथेच्छमनुभूय तिरस्करोतोतियावत् ॥ * * * ॥ तस्मात् । सर्वातिशयमहाकैलासप्राप्तत्वात् । ब्रह्मणः । दिव्यमंगलविग्रहविशिष्टमहेश्वरस्य । महिमानं गच्छति । तत्सामर्थ्यं लभतेत्यर्थः । तत्सदृशोभवतीतिभावः । तस्मात् । तत्सारूप्यप्राप्त्यनन्तरमित्यर्थः ॥ ब्रह्मणः । सर्वव्यापक शिवतत्वस्य । महिमानं गच्छति । तस्मिन्लीलनोभूत्वा तत्सामर्थ्यं लभतइत्यर्थः ॥ इत्युपनिषत् । एतदुपनिषत्प्रतिपाद्यरहस्यमित्यर्थः ॥ इति नारायाणख्य कूचिरुद्रेद्विपञ्चाशदनुवाकभाष्यं समाप्तम् ॥ ५२ ॥

श्रीशिवाय नमः

# एतदध्यायस्य षड्विधलिङ्ग तात्पर्यनिर्णयः क्रियते

अम्भस्यपारेत्युपक्रमवाक्ये बृह बृंहि वृद्धाविति धातुनिष्पन्न ब्रह्मस्वरूपलक्षणात्मकानन्तत्वमुपदिष्टं । उपसंहारे तस्माद्ब्रह्मणो महिमानमाप्नोतीति ब्रह्मशब्देन उपसंहृतम् ॥ * ॥

ब्रह्मा शिवोमे अस्तु सदाशिवों ॥ ऋतँ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं । इत्युत्तरत्र सर्वँ ह्येतद्ब्रह्मायमात्मा ब्रह्मेत्युपक्रम्य उपसंहारे । शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा सविज्ञेयः । शिवोद्वैत इति ब्रह्मशब्द वाच्यः शिव एवेति ॥ माण्डूक्ये च स्पष्टमुपदिष्टत्वात् । इवं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी । यत्परं ब्रह्मसर्वात्मा विश्वस्यायतनं महदित्यादिना

कैवल्य श्वेताश्वतर जावालाथर्वण शिखाथर्वशिरस्तैत्तिरीयादिषु ब्रह्म शिव शब्दयोः हस्तकरपाणिशब्दवत्पर्यायवाचकत्वव्यपदेशात् ॥ भट्टभास्करहरदत्ताचार्यनीलकण्ठाचार्य शंकराचार्याप्पयदीक्षितादि महद्भिः ॥ लिङ्गं ब्रह्म सनातनं । चिदानन्दरूपः शिवोहं शिवोहं ॥ करटिचर्मणे ब्रह्मणे नम इत्यादिषु । तथास्पष्टमुपदिष्टत्वात् ॥ श्रीपतिपण्डितनीलकण्ठाचार्यैरथातो ब्रह्म जिज्ञासेति । ब्रह्मसूत्रस्थित ब्रह्मपदस्य शिवपरत्वव्यवस्थापनाच्च । एतदुपक्रमोसंहारादिषड्विधलिङ्गतात्पर्येण शिवपरत्वेन समन्वयात् । नारायणे तथासमन्वययोगात् । उत । नारायण शब्दस्य णत्वबाधा निवारकत्वेन नीलकण्ठाचार्य भट्टभास्कर हरदत्ताप्पयदीक्षितादिमहद्भिः । शिवपरत्वस्थापनात् ॥ यौगिक रुढ्या पूर्वस्मिन्मया च तथा निरूपितत्वात् । शरण्य त्रियम्बके देविनारायणि नमोस्तुतेत्यादिषु पार्वत्याः नारायणीति बहुशः प्रयोगदर्शनेन नारायणस्यपत्नी नारायणीति व्युत्पत्यानारायण शब्दस्य शिवेरूढिदर्शनात् । यानि नामानिगोविन्द तवलोके महीयते । तान्येव मम नामानि नात्रकार्या विचारणा । अहं त्वं सर्वलोकेशत्वमेवाहं जनार्दन । आवयोरन्तरं नास्तिशब्दैरथैर्महीतल इति हरिवंशे शिवेनोक्तमितिभगवता बादरायणेन । तथास्पष्टमुपदिष्टत्वात् ॥ नमोस्तु परमेशाय शार्ङ्गिणे विष्णुरूपिणे । नारायणाय रामाय गोविन्दायनमो नम इति पद्मपुराणस्थित शिवसहस्रनामावल्यां भगवता व्यासेन । नारायणशब्दस्य शिवेरूढत्वव्यवस्थापनाच्च सर्वत्रनारायणपरत्व बोधक वचनानां विशेषणरीत्याउत विशेषरीत्यावा । शिवपरत्वमेवेतिराद्धान्तः ॥ एक एव नारायणो आसीदिति वाक्यदर्शनेन नारायणस्य परब्रह्मत्वेन सर्वविद्योपास्यत्वमिति यदुक्तं तदुन्मत्तप्रलपनमिवाविचारितरमणीयं । रूढिर्योगमपह-

रतीति न्यायस्य मुख्यार्थबाधा भावस्थलएवावकाशात् ॥ एकएवनारायणो आसीदितिवाक्येन । शक्तेरासीत्पराशर इत्यादाविवनारायणस्य जन्यत्वावबोधनात् ॥ विष्णोरिद्धा- परमस्ययोनिं बृहज्जातोवभिपातितृतीयमितिश्रुत्यन्तरे आदि- विष्णोरेव जन्यत्वावगमात् । यत्रापि नारायणस्यकारणकारण- त्वादर्शनात् । ईशकेनादिसर्वोपनिषत्सु मूर्तित्रयातीतस्यैव- परब्रह्मत्वेन दहरविद्योपास्यत्व प्रतिपादनात् ॥ तथात्वरशिवस्य- प्रतिपादनाच्च । पूर्वोक्तंयुक्तमितिरद्धान्तः ॥ ... ... ...

इति श्रीमद्वेदागमोभयवेदान्तसिद्धान्तवीरशैवप्रकाशकश्रीपतिप- ण्डिताराध्यवंशसम्भूत राजलिङ्गाराध्य पुत्र वृषभेन्द्रपण्डिता- राध्य कृतिषुतैत्तिरीय भाष्ये नारायणभाष्यं समाप्तम् ॥

श्रीपण्डितगुरुचरणारविन्दाभ्यान्नमः ॥

ग्रन्थेऽस्मिन् मूलप्राचीनपुस्तकानुसारतो भव- न्ति भूयांसो दोषा, अथ च सर्वत्र ॐ सुव इति पाठः ( अन्यत्र तु ) स्व इति पाठो दरीदृश्यते । परमधुनेयं शुद्धिपत्रिकाऽपि संयोजिता । सुधियां सविधे समायातमेनं ग्रन्थं विविच्य पठन्तु, पुनर्नः सूचयन्तु युवान इति किञ्चिद्ब्रूमश्च ।

पं० श्रीचिद्घनशर्मशिवाचार्याः

# श्रीशैव भाष्योपेत महानारायणोपनिषदः शुद्धि पत्रिका ॥

| अशुद्धम् । | शुद्धम् । | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| द्वताद्वैत | द्वैताद्वैत | २ | ३ |
| श्रतिषु | श्रुतिषु | " | १९ |
| रनवद्यति | रनवद्येति | ३ | ११ |
| प्रथमातुवाक | प्रथमानुवाक | " | २५ |
| प्राप्नोती | प्राप्नोती | ४ | ७ |
| पटवच्चति | पटवच्चेति | ४ | ८ |
| अइदं | आइदं | ४ | १३ |
| श्रुत्युकरीत्या | श्रुत्युक्तरीत्या | " | १७ |
| नास्तीत्यर्थः | नास्तीत्यर्थः | ६ | २३ |
| पूर्वहिजातः | पूर्वोहिजातः | १० | १३ |
| निरापार्थं | निरासार्थं | १० | २४ |
| पूर्व | पूर्वं | १३ | ८ |
| जनिता विधाता | जनिता सविधाता | १३ | १६ |
| धान्यभ्येरयन्त | धामन्यभ्यैरयन्त | " | १८ |
| वैषम्यादिकं | वैषम्यादिकं | १५ | २ |
| चतुर्गंगं | चतुर्वर्गं | " | १५ |
| सर्वमन्यत् | सर्वमन्यत् | १७ | ७ |
| अकार्यकाय | अकार्यकार्यं | २९ | १ |
| यताति | यतीति | " | ८ |
| रंधान | संधान | ३० | १८ |
| नयराव | नवएव | ३२ | ११ |
| कश्चिद् | किश्चिद | ३५ | १३ |
| सपाचिषः | सप्तार्चिषः | ४० | २१ |
| मजोऽयः | मजोऽन्यः | ४२ | १८ |
| मूलानुट्टक्कित | मूलानुट्टङ्कित | ४४ | १६ |

| अशुद्धम् | शुद्धम् | पृष्टे | पङ्क्तौ |
|---|---|---|---|
| डुष्वप्नियं | दुष्वप्नियं | ४६ | १३ |
| पङ्कजाशायि | पङ्कजशायि | ५१ | १० |
| त्यागेनैकेन | त्यागेनैकेना | ५३ | ७ |
| पुत्रासन्तानेन | पुत्रसन्तानेन | ५३ | १३ |
| वद्यव | वद्व्यव | ५७ | १० |
| रामकृष्ण | रामकृष्णा | ५९ | २० |
| शम्भुशब्द्वो | शम्भुशब्दो | ६३ | ८ |
| पांचारात्रा | पांचरात्रा | ६६ | १२ |
| शक्यामि | शक्यमि | ,, | १५ |
| सारभूयिष्ट | साररसभूयिष्ट | ७१ | ८ |
| सामनि | सामानि | ७२ | २१ |
| यजुरूपत्वं | यजूरूपत्वं | ७३ | ६ |
| विद्मा | विद्या | ,, | ७ |
| समालोकता | समानलोकता | ७३ | २० |
| अर्चयेन् | अर्चयन् | ७७ | २४ |
| नन्दिकेश्वरांध्य | नन्दिकेश्वराराध्य | ७८ | ४ |
| भंषयं | भाष्यं | ७९ | ७ |
| यो ब्राह्मणं | योब्रह्माणं | ८१ | ७ |
| विष्णवदि | विष्णवादि | ८४ | १६ |
| यजमनस्य | यजमानस्य | ८५ | २३ |
| गुयत्रीमावाहयाम्रि | गायत्रीमावाहयामि | ९१ | १९ |
| कुरुते | कुरुते | ९३ | २५ |
| उपसितु | उपासितु | ९४ | २१ |
| सावित्यादि | सावित्र्यादि | ,, | ,, |
| गायत्रा | गायत्र्या | ,, | ,, |
| ॐ भूः । ओं सुवः | ॐ भूः । ॐ भुवः ॐ सुवः । ( ॐ स्वः ) | ९६ | १४ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| मतिनां | मतीनां | ९७ | ११ |
| पुराणि | पुराणी | ,, | १२ |
| तत्वं मव | तत्वमव | ,, | २१ |
| ॐ मापो | ओमापो | ९८ | ७ |
| स्तुतोमया | स्तुता मया | ९९ | ३ |
| भूम्या | भूम्या | ९९ | ७ |
| कं ब्रह्मत्वं | कं ब्रह्म खं | १०० | ६ |
| सुघर्मह | सुवर्मह | ,, | १७ |
| निविश्यमृतं | निविश्यामृतं | १०३ | ८ |
| वायोज्यनि | वा योज्यानि | ,, | १५ |
| भोक्तकामाः | भोक्तृकामाः | ,, | १७ |
| मुपवृहितं | मुपवृंहितं | १०५ | ७ |
| तिस्वाहा | तिस्वहा | १०७ | २२ |
| त्रिसुर्पण | त्रिसुपर्णं | १०८ | ३ |
| शेनो | श्येनो | १०९ | २ |
| धिह्वा | जिह्वा | १०९ | १७ |
| दात्ताङ्ग | दीक्षाङ्ग | ११० | १५ |
| दग्निहात्रे | दग्निहोत्रे | ११२ | ४ |
| विग्रहः | निग्रहः | ११२ | ७ |
| अतिशय भिति | अतिशयमिति | ११३ | ११ |
| द्रव्यदानात् | दुद्रव्यदानात् | ,, | १५ |
| परस्वत्वपादकत्वं | परस्वत्त्वापादकत्त्वं | ,, | १८ |
| प्रयत्नवन्नो | प्रयत्नवन्तो | ११४ | ४ |
| घुराधर्षं | दुराधर्षं | ११५ | २२ |
| निष्कृतिस्स्वीष्टं | निष्कृतिस्स्विष्टं | ११६ | १९ |
| अरुणिः | आरुणिः | ११८ | ११ |
| परम | परमं | ११९ | ९ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| अवधून्वन्नि | अवधून्वन्ति | ,, | १३ |
| आगच्छन् | अगच्छन् | ,, | १५ |
| संध्यातशीलाः | संधानशीलाः | ,, | १८ |
| शत्रनपानुदन्ति | शत्रूनपानुदन्ति | १२० | ६ |
| तस्यः पितुः | तस्य पितुः | ,, | २० |
| शत्रवो | शत्रवः | १२१ | १३ |
| द्रह्मणिन्यासः | ब्रह्मणिन्यासः | १२२ | ६ |
| तस्मान्यास | तस्मान्न्यास | १२४ | ११ |
| त्याहु | त्याहुः | ,, | १२ |
| ब्रह्मान् | ब्रह्मन् | ,, | २३ |
| विश्वाधृक् | विश्वधृक् | १२५ | १३ |
| हर्महिमानौ | र्महिमानौ | १२७ | ६ |
| ब्रह्मणो | ब्राह्मणो | ,, | ,, |
| तस्माब्राह्मणो | तस्माद्ब्रह्मणो | १२७ | ७ |
| ये पार्थ | हे पार्थ | ,, | १२ |
| युक्तत्वात् | त्युक्तत्वात् | ,, | १६ |
| लोभादीनां | लोभादीना | १२८ | ७ |
| श्रुत्करीत्या | श्रुत्युक्तरीत्या | ,, | १० |
| प्रवग्यः | प्रवर्ग्यः | ,, | २० |
| वक्रे | वक्रं | ,, | २१ |
| तत्वताय | तत्त्वत्रय | ,, | २३ |
| लीलनो | लीनो | १३० | ७ |
| नारायणख्य | नारायणाख्य | ,, | ९ |
| पण्डिषाराध्य | पण्डिताराध्य | १३२ | १० |
| भाष्यां | भाष्य | भूमिकायां | ४ |
| प्रणीतला | प्रणीता | ,, | १६ |
| गुरुयिश्वा | [illegible] | ,, २ | ५ |
| १८५... | १८५... | ,, | १७ |

# श्रीकेदारनाथशिवतत्वग्रन्थमालायाः

## सम्भविष्यमाणपुष्पा ( ग्रन्था ) वलिः ॥

श्रीवृषभेन्द्रपण्डितशिवाचार्यप्रणीत श्रीशैवभाष्योपेत
तैत्तिरीयोपनिषत् ।
श्रीवृषभेन्द्रपण्डितशिवाचार्यप्रणीतश्रीशैवभाष्योपेत
पुरुषसूक्तम् ।
श्रीकेदारमण्डलमहिमादर्शः ।

# निवेदनम्

अयि भो भारतीया ! निगमागमोपनिषदभिमानिनो विद्वांसो, विद्यार्थिनः, श्रेष्ठिनः श्रीमन्तश्च, श्रीकेदारनाथ शिवतत्वग्रन्थमालायाः प्रथमं पुष्पमेतत् श्रीवृष-भेन्द्रशिवाचार्यप्रणीत श्रीशैवभाष्योपेत महानारायणोप-निषन्नामकं पण्डित श्रीचिद्घनशर्म शिवाचार्येण विद्या-र्थिना विश्वतोमुखं प्रयतनशीलेन परिश्रमतः प्रकाशितं, सत्वरं सानुकम्पं समाज्ञां ( आर्डरं ) सम्प्रेष्य, संगृह्य सम्पश्यन्तु समास्वादयन्तुतरां च भवन्त इति ।

व्यवस्थापकः श्रीमालामन्दिरस्य ॥

अधोनिर्दिष्टस्थलत्रये ग्रन्थोऽयं लभ्यते-

**श्रीकेदारनाथशिवतत्वग्रन्थमालामन्दिरम्**

पो० ओखीमठ, डि० गढ़वाल यू० पी०

**श्री शिवतत्वग्रन्थमालामन्दिरम्**

जंगमवाडीमठ, बनारस सिटी ।

**श्री पंचाचार्यप्रभा आफीस**

सय्याजीरावरोड, मैसूर सिटी ।